**No. 1999.** धर्म्माधर्म्मप्रबोधिनी। Substance, country-made paper, 14 × 8½ inches. Folia, 157. Lines, 8 on a page. Extent, 3,120 s'lokas. Character, Maithilí. Date, Sm. 1410. Place of deposit, Naváni, Post Mádhepurá, Darbháñgá, Paṇḍit, Vañsamaṇi Jhá. Appearance, old. Prose and verse. Correct.

**Dharmádharma-prabodhiní.** A digest of the Smṛiti rules regarding duty. By Premanidhi, son of Indrapati Mahámahopádhyáya, of Mithilá. The work was completed at Mysore, in the Nizám Sháhi dominion, in Samvat 1410, = A. D. 1353. It is divided into 12 chapters, thus—I. Daily duties. II. Worship. III. S'ráddhas. IV. Impurities. V. Purification. VI. Marriage. VII. Religious benefactions. VIII. Duties during times of distress. IX. Optional fasts. X. Pilgrimage. XI. Expiations. XII. Fruits of former works. Duties common to all classes, &c.

**Beginning.** जयति जयति गौरीबालको विघ्नहर्त्ता
जयति जयति देवो भानुकोटिप्रकाशः।
जयति जयति ++ सैकदन्तः सुरूपो-
जयति शुभगजास्यः पातु नः सिद्धिदाता॥
प्रणम्य जगदाधारं गुरुञ्चैव विशेषतः।
क्रियते शास्त्रणार्थाय धर्म्माधर्म्मप्रबोधिनी॥

अथ प्रातःकृत्यं। तत्र स्मृतिसमुच्चये,—दक्षः।
प्रातरुत्थाय कर्त्तव्यं यच्चकृत्यं दिने दिने।
तत् सर्व्वं सम्प्रवक्ष्यामि द्विजानां विधिसिद्धये॥ इत्यादि।

**End.** मन्वादिस्मृतिमालोक्य याज्ञवल्क्यं तथैव च।
श्रीमत्प्रेमनिधिर्धीमान् अकरोद्धर्म्मबोधिनीम्॥
श्रीमद्राजनिजामसाहविषये माहिस्मती या पुरी
सा मे पूर्व्वजवासभूश्च सततं देवोऽपि यां वाञ्छति।
श्रीमन्मैथिलठक्कुरेन्द्रपतिजो यत्नेन दृष्ट्वा स्मृतिं
कार्य्याकार्य्यविचारणार्थमकरोद्देवोपकण्ठे वसन्॥

**Colophon.** इति महामहोपाध्यायमट्ठक्कुरश्रीमदिन्द्रपतिसूनुश्रीप्रेमनिधिविरचिते धर्म्मशास्त्रे धर्म्माधर्म्मप्रबोधिन्यां द्वादशोऽध्यायः। समाप्तश्चायं ग्रन्थः।
मार्गे मासि सिते पक्षे षष्ठ्यां वै भृगुवासरे।
यत्नेन पाल्यतां विप्रैः समाप्तेयं प्रबोधिनी॥ संवत् १४१०॥

विषयः। प्रथमेऽध्याये,—आचारनिरूपणं। तत्र प्रातःकृत्यविधिः। मूत्रपुरीषाद्युत्सर्गस्थानादिनिरूपणं। मद्विधमौनविधानं। शौचविधिः। परिधानीयवस्त्रनिषेधः। सन्ध्यास्नानजपहोम-देवपूजातिथ्यवैश्वदेवरूपषट्कर्म्मनिरूपणं। तत्र विविधस्नानविधानं। आचमनविधानं। दन्तधावनविधिः। तत्र मन्त्रादिकथनञ्च। क्षौरकर्म्मविधिः। तैलनिषेधः। क्वचित् तैलाभ्यङ्गविधिः। प्रातःस्नानविधिः। तिलकविधिः। कुशमाहात्म्यं। तदुत्पाटनविधिः। तर्पणविधिकथनञ्च।

द्वितीयेऽध्याये,—अभिवादनविधिः। देवपूजाविधिः। तत्र अर्घ्यपाद्यादिविधिः। पुष्पनिरूपणं। अनुलेपनविधिः। धूपदीपनैवेद्यासनादिविधिः। प्रतिमानिरूपणं। शिवलिङ्गमाहात्म्यं। चण्डिकापूजाविधिः। विष्णुपूजाविधिः। घण्टावादनविधिः। शङ्खपूजाविधिः। होमविधिः। वैश्वदेवविधिः। आतिथ्यविधिकथनञ्च।

तृतीयेऽध्याये,—श्राद्धविधिः। तत्र श्राद्धपूर्व्वदिनकृत्यं। एकोद्दिष्टविधिः। श्राद्धकर्त्तृनियमाः। तीर्थश्राद्धविधिः। विप्रपतितादिश्राद्धविधिः। वृषोत्सर्गविधिः। श्राद्धाधिकारिणः। द्वादशविधपुत्रविवेचनं। मलमासादिनिरूपणं। विषशस्त्रादिहतानां श्राद्धविधिः। अपरपक्षामावस्यादिश्राद्धविधिः। श्राद्धप्रशस्तद्रव्याणि।

चतुर्थेऽध्याये,—अशौचनिरूपणं। सद्यःशौचादिदशविधाशौचनिरूपणं। अशौचसङ्करनिरूपणं। बालाद्यशौचं। स्त्र्यशौचं। मृत्युविशेषाशौचं। सपिण्डाद्यशौचं। निर्हरणाद्यशौचं पिण्डदानविधिः। अशौचान्तदिनकृत्यं।

पञ्चमेऽध्याये,—द्रव्यशुद्धिनिरूपणं। तत्र जलशुद्धिलेपशुद्ध्यादिनिरूपणं। धातुशुद्धिः। वस्त्रादिशुद्धिः। शय्यादिशुद्धिः। तृणकाष्ठादिशुद्धिः। स्वभावशुद्धिः। उच्छिष्टादिस्पर्शशुद्धिः। नानावस्तुस्पर्शशुद्धिः। अमेध्यस्पर्शशुद्धिः। आचमनानुकल्पः। कुक्कुरादिस्पर्शशुद्धिः।

षष्ठेऽध्याये,—विवाहविधिकथनं। कन्यादानाधिकारिणः। कन्यालक्षणादिकथनं। स्त्रीधर्म्मकथनं। पतिव्रतालक्षणादिकं। स्त्रीगमनविधिः। गर्भाधानकथनं। जन्मविवरणकथनप्रसङ्गेन संक्षेपेण शारीरस्थाननिरूपणं। पुत्रजन्मादिकृत्यं। उपनयनादिविधिः। ब्रह्मचारिनियमाः। अनध्यायाः। गार्हस्थ्यविधिः। वानप्रस्थविधिः। यतिधर्म्मनिरूपणं।

सप्तमेऽध्याये,—ब्राह्मणप्रशंसा। दानविधिः। कृष्णधेन्वादिदानविधिः। महादेवप्रतिमाशालग्रामदानादिविधिः। गृहादिदानविधिः। अन्नजलभूमिदानादिविधिः। मासादिनियतदानविधिः। आरामादिवृक्षरोपणफलकथनं। सत्प्रतिग्रहासत्प्रतिग्रहादिनिरूपणं। देशकालपात्रविवेचनं।

अष्टमेऽध्याये,—आपद्धर्म्मनिरूपणं। क्षीरादिविक्रये पातित्यादिनिरूपणं। चातुर्वर्ण्यसाधारणधर्म्मनिरूपणं। भक्ष्याभक्ष्यनिरूपणं। प्रतिपदादिषु कुष्माण्डादिभक्षणनिषेधः। भोजनविधिः। जातिविवेकः।

नवमेऽध्याये,—प्रमादौ तिथ्यादिनिरूपणं। एकादशीनिरूपणं। उपवासनियमाः। महा-द्वादश्यादियोगः। रामनवमीविधिः। चैत्रादिद्वादशमासकृत्यनिरूपणं। सावित्रीव्रतं। दशहरा। चातुर्मास्यविधिः। जन्माष्टमीविधिः। नवरात्रपूजाविधिः। सङ्क्रान्तिपुण्यकालनिरूपणं। अर्द्धोदययोगः।

दशमेऽध्याये,—तीर्थमाहात्म्यकीर्त्तनं। तीर्थनामानि। निवासस्थाननिरूपणं। राजधर्म्म-कीर्त्तनं। करादानादिविधिः। दुर्गादिनिरूपणं। ऋणदानादिविधिः। आधिनिरूपणं। साक्षिविधिः। लेख्यदिव्यादिप्रकरणं। सीमाविवादादिनिरूपणं। दायभागकथनं। द्यूतविधिः। दण्डपारुष्यविधिः। स्तेयविधिः। अभिगमादिदण्डविधिः।

एकादशेऽध्याये,—वधनिर्णयः। महापातकादिनिरूपणं। ब्रह्महत्यासुरापानादिप्रायश्चित्तं। अगम्यागमनप्रायश्चित्तं। क्षत्रियादिवधप्रायश्चित्तं। गोवधादिप्रायश्चित्तं। प्रायश्चित्तादिनिमित्तानि। स्त्रीवधप्रायश्चित्तं। इतरप्राणिवधप्रायश्चित्तं। इतरद्रव्यस्तेयप्रायश्चित्तं। प्रमादौ क्रमियोगे प्राय-श्चित्तं। आत्मघातप्रवृत्तप्रायश्चित्तं। अपमृत्युमरणप्रायश्चित्तं। गवादिविक्रयप्रायश्चित्तं। निन्दित-विवाहप्रायश्चित्तं व्रात्यप्रायश्चित्तं। चान्द्रायणकृच्छ्रादिव्रतलक्षणं।

द्वादशेऽध्याये,—कर्म्मविपाककथनं। सामान्यतः सर्व्ववर्णकर्त्तव्यानि। माङ्गल्यानि। अश्व-त्थादिवृक्षरोपणविधिः। लवणसंयुक्तक्षीरादिभक्षणनिषेधः। दीपनिर्व्वाणदोषाः। शयनविधिः।

---

**No. 2000.** पुरञ्जनचरितनाटकम्। Substance country-made paper, 10 × 2½ inches. Folia, 30. Lines, 6 on a page. Extent, 531 s'lokas. Character, Maithilí. Date, Sk. 1701. Place of deposit, Sáradápura, Post Mádhepurá, Darbhángá, Paṇḍit Harshanátha Jhá. Appearance, fresh. Prose and verse. Correct.

**Puranjana-charita.** A drama in five acts founded on the story of Puranjaná as given in the Bhágavata Puráṇa. By Krishnadatta, of Mithilá. The play was first acted in the court of Purushottama Deva, of Orissá. The object of the work is to promote devotion to Krishna.

**Beginning.** नित्यानन्दचिदात्मकस्य कलया यस्याच्युतस्याखिलं
विश्वञ्चेति तमप्यचेतनमिव प्रागभ्राम्यति भ्राम्यति।
यो ग्टह्णात्यकरः स्खलत्यचरणः पश्यत्यचक्षुः शृणो-
त्यश्रोत्रो मनसो गिरोऽप्यविषयो भक्तैर्वशोऽव्यात् स वः॥

अपि च। एकं वृक्षमधिष्ठितौ सहचरौ दिव्यौ सुपर्णौ भजे
पक्वं पिप्पलमत्त्यदन्निह ययोरेको गणैर्बध्यते।

शास्त्रज्ञप्यनिदीप्तिमञ्चति परो बुद्धा तमेव श्रितो-

बद्धोऽसावपि युक्तिमेति न परो मोक्षाय पन्था मतः ॥

ान्त्यन्ते सूत्रधारः। अलमतिविस्तरेण। भक्तिभावनाविभाकरविभाविभासितशुद्धमानस-
ारसमभ्यासितरमारमणचरणषट्चरणस्य क्षणक्षणविलक्षणविनयविवेकदयादानदाक्षिण्यादि-
ुणगणस्य निष्प्रपञ्चपरोपकारजागरूकयशोभारघनसारप्रसारसुरभीकृतसंसारस्य परमरमणीया-
ारस्य श्रीदिवाकरपुरुषोत्तमस्य सभायां — — — — — — — — सुखोपविष्टानां शि-
ष्टानां देवविदेशवास्तव्यानां शास्त्रिणां ब्राह्मणानां राजकार्य्यभारिणां व्यापारिणाञ्च मण्डली
समुल्लसति। तदत्र नवीनं किमपि नाटकमभिनेतव्यमिति। नेपथ्याभिमुखमवलोक्य। आर्य्ये
इतस्तावत्। प्रविश्य नटी। अज्ज सम्मि आणवेदु अज्जो को णिओओ अणुचिट्ठीअदुत्ति।
सूत्रः। आर्य्ये साधुसमाजमाराधयितुमिच्छामि। नटी। कइसं उणपओअं समप्पिअ एदस्स
आरोहणं करिस्सदि अज्जो। सूत्रः। यत् किल मैथिलकृष्णदत्तकविना पुरञ्जनचरितं नाम
नाटकं निर्माय अस्मासु समर्पितं तदभिनयेनाराधनमस्य सम्भविष्यति। इत्यादि।

End. श्रीतनुच्छविसुवर्णरेखितसाङ्गकान्ततडिद्गुणाश्रयि।

कृष्णरूपनिकषे निवेशितं प्रेमहेमसुपवीक्ष्यतां मम ॥

अविज्ञात एवमस्तु। इति निष्क्रान्ताः सर्व्वे।

Colophon. पुरञ्जनदुःखभञ्जनो नाम पञ्चमोऽङ्कः। समाप्तमिदं नाटकमिति।

शाकेऽब्दे धरणीवियन्मुनिधरासंख्यासमाने शुभे

माघे मासि दिवामणौ मकरगे विष्णोस्तिथौ सादरं।

श्रीमन्मैथिलकृष्णदत्तकृतिना सन्निर्म्मितं नाटकं

प्रालेखीत्पदिदं मुदा इततरं श्रीहेमनाथद्विजः ॥ शुभमस्तु।

विषयः। (श्रीमद्भागवतीयपुरञ्जनोपाख्यानमवलम्ब्य गुम्फितमिदं नाटकम्।)
तत्र प्रथमाङ्के,—पुरञ्जनसचिवयोरभिनयेन तयोर्नागपुरप्रवेशसूचनं। तत्र च नागराजनाग-
रीभिः सादरं सुगृहीतयोस्तयोः स्वामिन्यै स्वात्मनिवेदनम्। समनन्तरञ्च समं तत्पुराधि-
कारिण्या पुरञ्जन्या पुरञ्जनस्य परिणयः समजनि।

द्वितीयाङ्के,—मृगयानुरागिणो राज्ञोऽदर्शनेन सम्पादितायाः अपि सहजन्यया पुरञ्जन्याः
शिरोवेदना मूर्च्छा च। अत्रान्तरे समागतस्य तस्य विमर्शनमनुगमनञ्च तदनु मदोद्दनादिदेशं
प्रस्थितायास्तस्याः।

तृतीयाङ्के,—सितपक्षचरयोरभिनयेन नगरमध्ये शत्रुप्रवेश-पुररोधन-पुरञ्जनापसरण-
सूचनम्।

चतुर्थेऽङ्के,—अलक्षितलक्षणेन भगवता सह विलक्षणचरस्य संवादः। तत्र च नवलक्षणा-
नाम्नी कामधेनुः प्रविश्यात्मनो गुञ्जरवृन्दावनादिदेशभ्रमणविवरणं निवेदयामास। अत्रान्तरे

चेटीमात्रसनाथायाः नाथविरहविधुरायाः पुरहन्याः अग्निप्रवेशसाहसमवलोक्य नवलक्षणया तस्याः समाश्वासनञ्च ।

पञ्चमाङ्के,—नवलक्षणासाहाय्येन तस्या गोपालकौतुकगमनपूर्व्वकं भगवद्दर्शनेन कृतार्थता पुनः पुरहनसमागमश्चेति ।

---

**No. 2001.** शूद्राचारचिन्तामणिः । Substance country-made paper, 11 x 2 inches. Folia, 102. Lines, 5 on a page. Extent, 1764 s'lokas. Character, Maithilí. Date, L. S. 425. Place of deposit, Sáradápur. Post Mádhepurá, Darbhángá, Pandit Vis'vanátha Jhá. Appearance, destroyed by worms. Prose and verse. Correct.

**S'udráchára-chintámaṇi.** On the religious duties of S'udras. By Váchaspati Misra, of the court of Mahárájá Harináráyaṇa, of Mithilá.

**Beginning.** नीलग्रीवं नमस्कृत्य श्रीवाचस्पतिशर्म्मणा ।
धर्म्मशास्त्रं समालोक्य शूद्राचारो वितन्यते ॥
तत्र । उद्बोधमैत्रशौचानि तथाचमनकारणम् ।
हेतुर्द्विराचम ++ प्रातस्नानादिक ततः ॥
मध्यन्दिनस्नानविधिस्तर्पणस्य विधिस्ततः ।
देवार्चनं तत्प्रसङ्गाद्वैष्णवस्य च लक्षणम् ॥ इत्यादि ।

**End.** मिथ्याभिशंसिनो दोषा द्विः स+भूतवादिनः ।
मिथ्याभिशस्तदोषञ्च समाद+ + + + + ॥

**Colophon.** इति महाराजाधिराजश्रीमद्धरिनारायणपरिषदा सकलपण्डितमण्डलीशिरोमणिना श्रीवाचस्पतिमिश्रेण विरचितः शूद्राचारचिन्तामणिः समाप्त इति ।
शुभमस्तु । लसं ४२५ । ज्यैष्ठवदि ।

विषयः । सदाचारनिरूपणादिकं । शूद्राणामुद्बोधविधिकथनं । मलमूत्रादित्यागविधिः । शौचविधिकथनं । आचमनविधिकथनं । आचमननिमित्तानि । द्विराचमननिमित्तानि । आचमनापवादकथनं । दन्तधावनविधिः । प्रातस्नानादिविधिः । प्रातःकालादिनिरूपणं । साधनादिविधिकथनं । पोष्यवर्गपालनावश्यकतानिरूपणमुखेन पोष्यवर्गनिरूपणं । योगक्षेमादिकथनं । नैमित्तिकादिषड्विधस्नानविधिः । तर्पणविधिः । अलस्थलयोस्तर्पणविधिः । देवपूजाविधिः । उपचारविधिः । पुष्पादिचयनविधिः । दुर्गापूजाविधानादिकथनं । शिवपूजाविधिः । सूर्य्यपूजाविधिः । पञ्चोपचारादिविधिः । धूपदीपनैवेद्यादिनिरूपणं । शूद्रेण वैश्वदेवानन्तर-

पूजापद्धे सिज्ञाग्रे देयं मान्यवेति निरूपणं। रसालादिविधिकथनं। विशेषेण दुर्गाशिवयोः पूजाविधिकथनं। शिवलिङ्गादिनिर्म्माणविधिः। विचित्राविचित्रपुष्पाणि। विष्णुपूजाविधिः। शालग्रामशिलामाहात्म्यादिकीर्त्तनं। भगवद्गीतादिमाहात्म्यकथनं। विष्णोर्द्वात्रिंशदपराधाः विष्णवे दानानि। गवादिदानविधिः। सर्व्वत्र विशेषदानप्रयोगकथनं। हरिभक्तिमाहात्म्य-कीर्त्तनं। पञ्चमहायज्ञविधानं। तत्र वैश्वदेवप्रयोगकीर्त्तनं। नित्यश्राद्धविधिः। तत्र प्रयोगकथनं। अतिथिपूजाविधिः। भोजनविधिः। भोज्याभोज्यनिरूपणं। पानयोग्यदुग्धादिनिरूपणं। पशु-पक्षिमांसादिभक्षणविधिः। तत्र भक्ष्याभक्ष्यनिरूपणं। भक्ष्यमत्स्यनिरूपणं। मांसभक्षणवर्ज्जनयो-विधिः। पशुवधघातकलक्षणादिकथनं। शयनविधिकथनं। दारोपगमनविधिः। गर्भाधानादि-विधिकथनं। रजस्वलाधर्म्मनिरूपणं। सामान्यतः स्त्रीधर्म्मनिरूपणं। गार्हस्थ्यधर्म्मनिरूपणं। मिथ्याशंसनादिदोषकीर्त्तनञ्च।

---

No. 2002. दानपञ्जी। Substance, country-made paper, 11 × 3 inches. Folia, 49. Lines, 9 on a page. Extent, 1,708 s'lokas. Character, Maithilí. Date, ? Place of deposit, Sáradápura, Post Mádhepurá, Darbhángá Pandit Harshanátha Jhá. Appearance, new. Prose and verse. Correct.

Dánapanjí. A summary of religious benefactions. By Ratnákara Thakkura.

Beginning. यदीयस्मरणादेव समीहितमवाप्यते।
सद्भिर्निर्विघ्नमधुना तन्नमामि परं महः॥
श्रीरत्नाकरधीरेण विस्तराद्दानसागरात्।
सर्व्वसारं समुद्धृत्य किञ्चिदाकृष्य लिख्यते

तत्र दानप्रशंसा। यानि सन्त्यत्र + + नि हरेः प्रोक्तानि शंसति।
तेषां श्रेष्ठतमं दानमिति मे नास्ति संशयः। इत्यादि।

End. दक्षिणां दद्यात्। ततः ॐ स्वस्तीति प्रतिवचनं। अन्यतो गद्यमानीय दक्षिणां दद्यात्।

Colophon. इति श्रीरत्नाकरठक्कुरविरचिता दानपञ्जी समाप्ता।

विषयः। दानस्वरूपनिरूपणं। देयद्रव्यगुणकथनं। दानविधिः। दानकालनिरूपणं। अलङ्कारधान्यादिदानविधिः। वर्षभोज्यदानविधिः। कपिलादिगोदानविधिः। उभयतोमुखी-दानविधिः। वृषभधेनुदानविधिः। गुड़धेनु-तिलधेनु-जलधेनु-घृतधेनुप्रभृतिदानविधिः। वत्सदक्षिणीदानविधिः। अश्वदानविधिः। दोलादिदानविधिः। दासीदानादिविधिः। आस-नादिदानविधिः। सिन्दरतैलशर्कराजलधर्म्मघटादिदानविधिः। विविधफलमत्स्यदानविधिः।

सुवर्णरजततामादिदानविधिः। पूर्णपात्रकृष्णाजिनादिदानविधिः। ग्रामनगरादिदानविधिः। शालग्रामशिवलिङ्गादिदानविधिः। घृतघटादिदानविधिः। कौशेयवस्त्रादिदानविधिकीर्त्तनञ्च। अत्र सर्व्वत्र दानप्रयोगकीर्त्तनमिति ज्ञेयम्।

---

**No. 2003.** योगरत्नाकरः। Substance, country-made paper, 12 x 4 inches. Folia, 20. Lines, 6 on a page. Extent, 384 s'lokas. Character, Maithilí. Date, ? Place of deposit, Sáradápura, Post Mádhepurá, Darbhángá, Pandit Harshanátha Jhá; another copy at S'ántipura, Pandit Kálidása Vidyávágis'a. Appearance, fresh. Verse. Generally correct.

**Yoga-ratnákara.** A guide to the performance of Yoga meditations, giving details about the various modes of sitting, regulating the breath, &c., &c. By Víresvaránanda.

**Beginning.** यद्ब्रह्म वेदाः प्रवदन्ति सन्तश्चैतन्यमव्दात्मकमव्ययं तत्।
योगीन्द्रवृन्दैः परमात्मतेजो ध्यातं सदाद्यादनिशं परं नः॥
आनन्दोल्लासकन्दोपरिपरिविलसद्ब्रह्म पद्माम्बरस्थं
नित्यं चैतन्यरूपं वरद-भयहरं तत्त्वविद्यात्मयुक्तम्।
शान्तं पूर्णेन्दुकुन्दोज्ज्वलविमलवपुर्विश्वनाथं भजेऽहं
विज्ञानध्यानहंसं सकलसुरगणैर्योगिभिर्वन्द्यमेकम्॥
वदाम्यहं योगमलङ्घ्यमच्युतं यतोऽभवत् शाश्वतमव्ययं स्वयम्।
अभ्यासतो ब्रह्मनिरूपणात्मकं संसारसिन्धोस्तरणैककारणम्॥
सारं सङ्गृह्य तन्त्राणां वेदानां मतमव्ययम्।
योगिनां परहंसानां सिद्धानां विदुषां सताम्॥
श्रीमद्वीरेश्वरानन्दस्तनोति ज्ञानसिद्धये।
योगरत्नाकरे ग्रन्थे क्रमशो मोक्षहेतवः॥ इत्यादि।

**End.** अभ्यासाद्भवतीह सिद्धिरतुला ध्यानाद्धि योगीश्वरः
सम्पाठात् कवितालिरेव विमला सम्पाठ्यते येन वै।
तस्याष्टौ परिसिद्धयः करतले नित्यं भवेन्मुक्तिमान्
पापान्मोक्षविमानमेति नितरां निर्व्वाणमेवाच्युतम्॥
श्रीमद्धरिहरानन्दनाथशिष्येण धीमता।
श्रीमद्वीरेश्वरानन्दकृतिना ग्रन्थ ईरितः॥ ॐ नमस्तारिण्यै।

**विषयः।** प्रथमतो योगाभ्यासप्रकारनियमादिकथनम्। कुम्भकादिकरणविधिकथनं।

प्राणायामस्वरूपकथनादिकं। आसनविधिकथनं। ध्यानप्रकारकथनं। ध्येयस्वरूपादिकीर्त्तनं। षट्चक्रनिरूपणादिकं। शिवमीर्थयाध्यात्मिकतीर्थनिरूपणं। अमर्षजननविधिकथनं। सन्ध्यानादिविधिकथनं। उद्दर्त्तनविधिः। आन्तरचिह्ननिरूपणं। शारीरतत्त्वकथनमुखेन जीवस्वरूपादिकथनं। मोक्षस्वरूपकीर्त्तनञ्च।

---

**No. 2004.** पाण्डवचरितम्। Substance, country-made paper, 12 × 1½ inches. Folia, 127. Lines, 5 on a page. Extent, 2,530 s'lokas. Character, Maithilí. Date, ? Place of deposit, Sáradápura, Post Mádhepura, Darbháñgá, Paṇdit Vis'vanátha Jhá. Appearance, decayed. Verse. Correct.

**Páṇḍava-charita.** An epic poem on the career of the Páṇḍavas, founded on the details given in the Mahábhárata. By Lakshmídatta, son of Lakshmínáráyaṇa, who styles himself a Rájapaṇḍita, but does not say in whose court he flourished. The codex is incomplete, breaking off in the middle of the 21st canto.

**Beginning.** कन्दर्पदर्पाङ्कुरमात्मयोगं सिन्दूरपूरारुणमिन्दुगौरम्।
कुन्दावदातस्मितमद्वहासं वन्दामहे तद्दृहयमद्वयं वा॥
गोवत्सपुच्छग्रहणोत्सुकाय गोपाङ्गनापाङ्गतरङ्गिताय।
आनन्दनन्दाङ्गनरिङ्गणाय तस्मै परस्मै महसे नमोऽस्तु॥
सन्दर्भलब्धाय विदर्भवाचां व्यासं भजे चन्द्रमसं कवीनाम्।
यद्भारतीनिर्भरचन्द्रिकाभिर्मोहान्धकारा जगतो विभूताः॥
व्यासस्य यद्भारतभारतीषु व्यासं समासादभिधातुमीहे।
आलम्बित + + + सम्य सम्यः कर्माणि कुर्वन्ति न किं किशोराः॥
सोमान्वये सोम इवाम्बराशौ राजाऽभवत्पाण्डुरिति प्रसिद्धः।
यद्वाहुमामाद्य सुखापधानं मद्दा + + + कमला व्यरंसीत्॥ इत्यादि।

**End.** सङ्ग्रामाय यदा जुहाव मरजिद्राचा तपोनन्दनो
व्याध्यामेरथ वा + + पनिषदां संसूय दुर्य्योधनं।
तज्जातं कुरुशासितुः सुरपुरप्राप्तेः पुरो मङ्गलं
प्रायश्चित्तमनुत्तमं खलु मतां यत्किञ्चिदाभाषणम्॥

**Colophon.** इति श्रीश्रीमल्लक्ष्मीनारायणराजपण्डितकविडिण्डिमलक्ष्मीदत्तविरचिते पाण्डवचरिते महाकाव्ये पाण्डवविजयो नाम विंशतितमः सर्गः। (इतः परमेकविंशतितमसर्गस्य कियदंशो वर्त्तते)।

विषयः। १मे सर्गे,—पाण्डोर्मृगयावर्णनं। मृगरूपधारिणः किमिंदममुनेः तस्य शापप्राप्ति कथनं। पाण्डवानामुत्पत्तिकथनञ्च। २ये,—पाण्डवानामस्त्रशिक्षावर्णनादिकं। ३ये,—वैषाने-कचक्रानिवासवर्णनं। ४र्थे,—द्रौपदीस्वयंवरवर्णनं। ५मे,—सुभद्राहरणवर्णनं। ६ष्ठे,—जल-विहारवर्णनं। ७मे,—खाण्डवदाहवर्णनं। ८मे,—राजसूयवर्णनं। ९मे,—द्यूतक्रीड़ावर्णनं। १०मे,—अर्ज्जुनस्य तपस्यार्थं प्रयाणवर्णनमुखेन गिरिवनादिवर्णनं। किरातार्ज्जुनसमरसंरम्भादि-वर्णनञ्च। ११शे,—अर्ज्जुनस्य सुरलोकगमनवर्णनं। तत्र स्वर्गवर्णनञ्च। १२शे,—अर्ज्जुनस्य उर्व्वश्या सह संवादवर्णनादिकं। १३शे,—युधिष्ठिरादीनां तीर्थयात्राप्रसङ्गेन बदरिकाश्रम-गमनवर्णनं। १४शे,—सौगन्धिकाहरणवर्णनं। १५शे,—पाण्डवानां द्वैतवनवासवर्णनं। गन्धर्व्व-राजकृतकौरवकामिनीहरणादिवर्णनञ्च। १६शे,—पाण्डवानां विराटनगरवासवर्णनं। १७शे,—उत्तरगोग्रहसङ्गरवर्णनं। १८शे,—कुरुपाण्डवयोः समरोद्योगवर्णनं। १९शे,—भीष्मवध-वर्णनं। अभिमन्युवधवर्णनञ्च। २०शे,—जयद्रथवधवर्णनं। द्रोणकर्णादिवधवर्णनं। दुर्य्योधनस्य द्वैपायनह्रदप्रवेशवर्णनञ्च। (इतः केचन एकविंशतितमसर्गीयाः श्लोका वर्त्तन्ते। तत्र च दुर्य्योधनस्योरुभङ्गवर्णनं।)

---

**No. 2005.** भक्तितरङ्गिणी, सेतुसहिता। Substance, country-made paper, 10 × 4 inches. Folia, 460. Lines, 10 on a page. Extent, 12,048, s'lokas. Character, Nágara. Date, ? Place of deposit, Sáradápura, Post Mádhepura, Dárbhángá, Paṇḍit Vis'vanátha Jhá. Appearance, fresh. Prose and verse. Correct.

**Bhakti-taraṅgiṇí.** A metrical dissertation on devotion to Kṛishṇa. By Vaidyanátha Páyaguṇḍa. The text extends to 200 s'lokas, and is divided into five cantos, metaphorically called waves, *taraṅgas,* in keeping with the name of the work, which means "the ocean of devotion." The author takes the Bhágavata Puráṇa for his text. The work was completed for the gratification of Govindarája, son of Rámaráya Maṇi, of the gotra of Bharadvája. Annexed to the work in a commentary entitled *Setu* or the bridge. Its author's name is not apparent.

**Beginning.** मूलस्य,—निखिलभुवनपालं कामिनीकेलिलोलं
यदुकुलमणिपालं दानवेन्द्रान्तकालम्।
सजलजलदनीलं नन्दबालं सुबालं
व्रजयुवतिरसालं नौमि गोपालबालम्॥
मोहितगोपीजालं दोलितमालं यशोविशालम्।
दर्शितचित्रलीलं नीरदनीलं नमामि गोपालम्॥

अस्ति श्रीमदमन्दमन्दरगिरिप्रायस्थलप्रस्थल-
तुङ्गोत्तुङ्गतरङ्गभङ्गिसुभगप्राग्भागजारोचिषि ।
इन्द्रप्रस्थमिति त्वचलेशसदनं सत्सम्पदामासनं
स्वःसाम्राज्यविडम्बिनिस्तुलगुणं भूमण्डलीमण्डनम् ॥
तत्रोदारपवित्रचित्रचरिते सद्विप्रविश्वम्भरा-
लम्बे विष्णुपदारविन्दमुकुलध्यानादवाप्तोदये ।
भारद्वाजकुलाम्बुधौ समभवच्छ्रीरामरायो मणिः
शान्तो दान्तियुतः सुनीतिनिपुणो रामोऽपरः सद्यशाः ॥
तस्मादाविरभूच्चतुर्थ इव यः सप्तार्चिषामष्टमो-
वर्षाणामिव पञ्चमः स पुरुषार्थानां महानीतिमान् ।
साक्षाच्छ्रीपतिराश्रिताजनभक्तिर्गोविन्दरायः सुधी-
++मेघ इवावदातहृदयो विष्णोः पदालम्बनः ॥
तत्या++तरो ललामसुयशःस्फीतः प्रपीताम्बरः
पञ्चासद्मनि यस्य हृत्सरसिजे स्वास्ते मुदा सर्व्वदा ।
साक्षात् केशव एव सम्प्रति पुनस्त्रातुं जगन्मण्डलं
तस्मात् श्रीविबुधाधिपो विजयते श्रीकेशवाख्यः सुधीः ॥
भूरिस्फुरन्मदगदाधिगताभिकाधि-
चेतोऽगदीकरणमौषधमद्वितीयम् ।
आदिष्टवान् स खलु भागवताब्धिसारं
कर्त्तुं यथा भवति मां मम हृत्प्रसादः ॥
तस्यादेशवशात् केशवविभोर्विद्वद्विभूषामणे-
र्ग्रन्थं भक्तितरङ्गिणीति विदितं स्वच्छं ततोऽभ्युद्धरे ।
श्रीमद्भागवताख्यरत्ननिधितो रत्नं सतां शर्म्मदं
माहात्म्यस्मरणादिपञ्चलहरीयुक्तं प्रयत्नादहम् ॥
आलोच्य निखिलं भक्त्या श्रीमद्भागवतं मुदा ।
इतस्ततानि तत्रत्यान्यत्र पद्यानि कौतुकात् ॥
लिखामि नत्वा नागेशं वैद्यनाथः स्वबुद्धये ।
पायगुण्डेति यः ख्यातः काश्यां सङ्कृत्य भक्तितः ।
अत्र श्लोका मया दृष्टाः सङ्गत्यर्थं शतद्वयम् । इत्यादि ।
शेषः,—अवनीतलवर्त्तिलोचनामृतवर्षि सगुणैकमन्दिरम् ।
प्रमदाजनमीनवेधनं शिशुरूपं तमहं भजे हरिम् ॥

वैद्यनाथः पायगुण्डो विद्वत्केशवदेवजः ।
व्याख्यां भक्तितरङ्गिण्याः सेतवाख्यां विलिखाम्यहम् ॥
श्रीधरस्वामिमुखिभिः कृता येषां मनोहरा ।
व्याख्या सर्व्वतः सा वै स्वीकीकृत्य प्रयत्नतः ॥
मौलक्रमानुरोधेन सविशेषात् क्वचित्मया ।
स्वकृतानां सुपद्यानां नूतना च विलिख्यते ॥

तत्र तावत् प्रारिप्सितग्रन्थप्रतिबन्धकदुरितशमनाय कृतमिष्टदेवतानमस्कारकपं मङ्गलं शिष्ये शिक्षायै व्याख्यात्श्रोतॄणामनुषङ्गतो मङ्गलाय च निबध्नाति लिखितेति ।

**End.** मूलस्य,—अतिप्रयत्नेन मया कृतोऽयं रसालयो ग्रन्थनिधिर्गुणाभ्रः ।
समर्पितः श्रीपतिपादपद्मे भक्त्या स तेनास्तु हरिः प्रसीदताम् ॥

**Colophon.** इति श्रीमत्पायगुण्डोपाख्यवैद्यनाथविरचितायां भक्तितरङ्गिण्यां पञ्चमस्तरङ्गः सम्पूर्णः । समाप्तोऽयं ग्रन्थः ।

सेतोः—रसानां नवानां शृङ्गारादीनां प्रेम्णो भक्तिरसस्य च आलयः, ग्रन्थेषु निधिः, गुणाभ्रः गुणाश्रयः । शुभमस्तु ।

विषयः । ग्रन्थोऽयं भगवन्माहात्म्यादिप्रतिपादकानां श्रीमद्भागवतीयपद्यानां सङ्ग्रहेण निर्मितः । तत्र च क्वचित् क्वचित्; सङ्गतिमेषां प्रतिपादयितुं स्वयमपि ग्रन्थकारो द्विशतसंख्यकान् श्लोकान् रचयामास । तत्र प्रथमे तरङ्गे श्रीमद्भागवतप्रामाण्यादिनिरूपणपूर्व्वकं प्रथमादिक्रमेण द्वादशस्कन्धवर्त्तिनां श्लोकानां विन्यासेन भगवन्माहात्म्यकीर्त्तनं। एवं द्वितीये तरङ्गे,—भगवद्धाम-प्रतिपादकानां श्लोकानां सङ्गतिर्दर्शिता । तृतीये तरङ्गे,—भगवदुपासनापरपद्यानां सन्दर्भ-सज्जीकरणं । चतुर्थे तरङ्गे,—भगवत्स्तुतिपराणां पद्यानां सङ्गतिप्रदर्शनं । पञ्चमे तरङ्गे,—भगव-द्भजनप्रयोजकानां तेषां गुम्फनेनैपुण्यप्रदर्शनेन भक्तिमाहात्म्यप्रपञ्चनं । ग्रन्थस्यास्यैव व्याख्यानं सेतुरिति ज्ञेयम् ।

---

**No. 2006.** तत्त्वदीपनम् । Substance, palm-leaf, 12 × 2 inches. Folia, 192. Lines, 6 on a page. Extent, 6,033 s'lokas. Character, Maithilí Date, ? Place of deposit, Sáradápura, Post Mádhepura, Darbhángá. Pandit Vis'vanátha Jhá. Appearance, old. Prose. Correct.

**Tattva-dípana.** A gloss on the S'abdakhanda of Gañges'a's Tattvachintámani. By Vishnupati, son of Rámapati Mahámahopádhyáya.

**Beginning.** भागधेयं परं ब्रह्म देवकीवसुदेवयोः ।
गुणमर्थ्यद्भुतैर्वन्दे भूयो गोपालबालकम् ॥

गुरो रामपतेः शास्त्रं ज्ञात्वा विष्णुपतिः पितुः ।
कुरुते शब्दखण्डस्य तत्त्वदीपनमीदृशम् ॥
अथशब्देति । अथेत्यानन्तर्य्याभिधानं मङ्गलितञ्चमनाय । इत्यादि ।

**End.** न च व्यभिचारिलिङ्गपरामर्शजन्यत्वेनानुमितेर्भ्रमत्वं स्यादिति वाच्यं गुणजन्यत्वेन तस्या अभ्रमत्वात् । + + +

**Colophon.** इति महामहोपाध्यायश्रीरामपतितनुजश्रीविष्णुपतिविरचितं शब्दखण्डस्य तत्त्वदीपनं परिपूर्णम् । ॐ शिवमिति ।

विषयः । गङ्गेशोपाध्यायकृततत्त्वचिन्तामणेः शब्दखण्डस्य व्याख्यानम् ।

---

**No. 2007.** किरणावलीप्रकाशप्रकाशिका । Substance, palm-leaf, 12 × 2 inches. Folia, 192. Lines, 6 on a page. Extent, 5,610 s'lokas. Character, Maithilí. Date, ? Place of deposit, Sáradápura, Post Mádhepura, Darbhángá, Paṇdit Vis'vanátha Jhá. Appearance, old. Prose. Correct.

**Kiraṇávalí-prakás'a-prakás'iká.** A gloss on Vardhamána's commentary on Prasastapáda's Vais'eshika treatise entitled Kiraṇávalí. By Bhagíratha Ṭhakkura.

**Beginning.** कैशोरं कलयन्नं मायाकायं पुरातनं पुरुषम् ।
नन्दालिन्दनिकेतं निगमरहस्यं नमस्यामि ॥
यः कैशोरे विश्वविख्यातकर्म्मा धर्म्माचार्य्यः श्रीमहादेवशर्म्मा ।
तस्योदर्य्यो वर्द्धमानस्य सूक्तौ भावं मेघः सम्यगाविष्करोति ॥

मूर्ध्नि परद्विष इति पूर्व्वेणान्वयि । तेनान्यदपि वीजं जलमम्भस्येनाङ्कुरयति इति ध्वनिः सूच्यते । इत्यादि ।

**End.** द्रव्यत्ववैशिष्ट्यसंसर्गमर्य्यादया भानेप्याश्रितत्वावच्छिन्नसाध्यस्य द्रव्यत्वेऽप्रसिद्धेरित्यतः सर्व्वमवदातमिति ।

धीरा धरणिभवानी यमजनि चन्द्राद्भगीरथं तनयम् ।
तस्य कृतावेतस्यां सन्तः सन्तोषमाचरत ॥
आसीदनुपमः पृथ्व्यां महादेवः कुलाग्रणीः ।
अनुजस्तस्य कृतवान् इमां व्याख्यां भगीरथः ॥

**Colophon.** इति महामहोपाध्यायठक्कुरश्रीभगीरथविरचिता किरणावलीप्रकाशप्रकाशिका समाप्तेति ॥

विषयः । किरणावलीनामप्रशस्तपादकृतपदार्थधर्मसङ्ग्रहस्य या व्याख्या तस्या वर्द्धमानकृतं प्रकाशाभिधेयं यद्व्याख्यानं तस्य व्याख्या ।

---

**No. 2008.** चण्डिकाचरितचन्द्रिका । Substance, country-made paper, 10 × 4 inches. Folia, 34. Lines, 10 on a page. Extent, 734 s'lokas. Character, Maithilí. Date, ? Place of deposit, Sáradápura, Post Mádhepura, Darbhángá, Paṇḍit Harshanátha Jhá. Appearance, fresh. Verse. Correct.

**Chaṇḍiká-charita-chandriká.** A poem on the exploits of the Deví as described in the Chaṇḍí section of the Márkaṇḍeya Puráṇa. By Kṛishṇadatta.

**Beginning.** सिद्धिश्रीः साधकानां प्रसरति पुरतो यत्पदाराधकानां
निर्विघ्नं यत्प्रसादादुदयति सहसा सापि निःश्रेयसश्रीः ।
त्रैगुण्यात्मस्वमूर्त्तिर्निरुपधिकरुणाश्चर्य्यमाधुर्य्यधुर्य्यात्
तुर्य्या सा कापि कुर्य्यात् सपदि मम मनःशुद्धिबुद्धिप्रसिद्धिम् ॥
चन्द्रचूडां चिदानन्दवपुं चन्दनचर्च्चिताम् ।
चक्रिणीं चञ्चलां चारु चिन्मये चण्डिकां चिरम् ।
सद्गुणाम्बुनिधिवृद्धिकारिणी तापपापतिमिरापहारिणी ।
सेव्यताममृतसारगर्भिणी चण्डिकाचरितचन्द्रिकाऽचिरम् ॥
मङ्गलमयि जनमङ्गलनामसहस्रे । प्रथयसि धामनि रजतमिव ।
श्रीमति गतिरसि जगदम्ब जय जय देवि शिवे ॥
ध्रुवम् । हरिमवबोधयसि च हरसि च विधिखेदम् ।
जनयसि मधुकैटभमतिभेदम् ॥ इत्यादि ।

**End.** सिद्धिरस्तु सकले मम साध्ये सम्प्रसादविभवेन शिवायाः ।
तत्पदाम्बुजयुगे रमणीये बुद्धिरस्तु सततं सुकृतश्रीः ॥

**Colophon.** इति कृष्णदत्तकृतौ सिद्धिलक्षणायां चण्डीचरितचन्द्रिकायां सम्प्रसादवर-प्रदानो नाम एकादशः सर्गः । समाप्तोऽयं ग्रन्थः ।

विषयः । देवीमाहात्म्यमवलम्ब्य विरचितमिदं गीतिकाव्यमिति ।

---

**No. 2009.** मिथिलेशाह्निकम् । Substance, country-made yellow paper, 11 × 4 inches. Folia, 212. Lines, 9 on a page. Extent, 5,459 s'lokas. Character, Maithilí. Date, ? Place of Deposit, Naváni, Post Mádhepura, Darbhángá, Paṇḍit Vañsamaṇi Jhá. Appearance, fresh. Prose and verse. Correct.

**Mithiles'áhníka.** A Smṛiti compilation embracing all the leading topics of domestic religious duties. By Ratnapáṇi S'armá, son of Gangolí Sanjévesvara S'armá.

**Beginning.** यस्ते कल्पलतां ययौ त्रिजगतां गोविन्दतां रक्षणे
संसारे चरतामपारतनुतां विश्वात्मतायाश्च यः ।
नैर्गुण्येऽप्यतरूपतामित्र परं तस्मै नमोऽमायिने
श्रेयस्याय करावलम्बनविधावालम्बनायास्तु ॥
वंशावलीचरित्रं मिथिलेशश्रीचन्द्रसिंहनृपतेः ।
कथितं रामचरित्रं शृणु विदितं तदाह्निकं सपदि ॥
प्रश्नोऽस्तु सामवेदित्वात् तथाचारोऽपि लिख्यते । इत्यादि ।

**End.** न्यायोपार्ज्जितवित्तेन कर्त्तव्यं ह्यात्मरक्षणम् ।
अन्यायेन तु यो जीवेत् स कर्म्मभ्यो बहिष्कृतः ॥
तिष्ठतु नाम प्रकीर्णकमतः परम्) ।

**Colophon.** इति श्रीगङ्गोलीसञ्जीवेश्वरशर्म्मात्मजश्रीरत्नपाणिशर्म्मसङ्गृहीते मिथिलेशाह्निके प्रकीर्णकं समाप्तम् ।

विषयः । वैदिकप्रातःकृत्यं । तान्त्रिकप्रातःकृत्यं । मूत्रपुरीषाद्युत्सर्गविधिः । शौचविधिः । आचमनविधिः । आचमनानुकल्पविधानं । दन्तधावनविधिः । प्रातःसन्ध्याविधिः । द्वितीययामार्द्धकृत्यं । एवं तृतीयचतुर्थयामार्द्धकृत्यनिरूपणं । स्नानविवेचनं । तत्र वैदिकतान्त्रिकादिमन्त्रकथनं । वेदाभ्यासादिकथनं । गुरुपूजाविधिः । पोष्यवर्गादिनिरूपणं । ब्राह्मणादिधर्म्मकथनं । नीतिकथनं । ब्राह्मणादिवर्णानां निषिद्धानि । आपत्कृत्यानि । चक्रदृह्यादिनिरूपणं । आतुरस्नानादिविधिः । अघमर्षणादिविधिः । द्विवस्त्रादिविधानं । स्नानानन्तरं शिरःकम्पने दोषकथनं । मन्त्रस्नानादिकथनं । तीर्थावाहनविधिः । तान्त्रिकादितिलकविधिः । वैदिकसन्ध्याविधिः । तत्कालविवेचनं । गायत्रीव्याख्या । दर्शनामतत्प्रभेदकीर्त्तनं । प्राणायामादिनिरूपणं । सामगानां वैदिकसन्ध्याप्रयोगः । तान्त्रिकसन्ध्याप्रयोगः । वैदिकतर्पणविधिः । यज्ञोपवीतविधिः । स्त्रीकर्त्तृकतर्पणे विशेषकथनं । काम्यतर्पणादिकथनं । पितृगाथाकीर्त्तनं । तर्पणवाक्यविवेचनं । जपयज्ञादिनिरूपणं । जपे निषिद्धानि । नवग्रहार्चनविधिः । ब्रह्मयज्ञविधिकथनं । गायत्रीहृदयगायत्रीकवचादिकथनं । तैलाभ्यङ्गादिव्यवस्था । देवप्रतिमानिरूपणं । शालग्रामशिलादिनिरूपणं । शिवनैवेद्यग्राह्यत्वनिरूपणं । देवगृहलेपनादिमाहात्म्यकथनं । देवतास्नाने घृतादिपलविवेचनं । अष्टमङ्गलनिरूपणं । सामान्यतः पूजनक्रमकीर्त्तनं । पुष्पविचारः । सूर्य्यादिदेवपूजाफलकीर्त्तनं । देवताविशेषे विहिताविहितपुष्पाणि । पुष्पस्नानविधिः । देवताविशेषे धूपनैवेद्यादिविवेचनं । स्नानकुम्भविवेचनं । नैवेद्यभक्षणविचारकथनं । दुर्गादिपूजाविधिः । शिवलिङ्गविधानकथनं । पञ्चमुखादिरुद्राक्षविधिः । लिङ्गपरिमाणादिकथनं । शिवनैवेद्यादिपवित्रता । वैष्णवस्य रुद्राक्षधारणफलं । समयविशेषे रुद्राक्षधारणनिषेधः । रुद्रादिप्रभेदतदभिषेकादिकथनं । शतरुद्रीयकथनं । विष्णुपूजाविधिः । अथ षोडशो-

पचारादिनिरूपणं। सर्व्वदेवमन्त्रकथनं। अष्टाङ्गपञ्चाङ्गादिप्रणामविधिः। निर्म्माल्यधारणादि विधिः। विष्णोरपराधाः। पत्रदानेनापराधक्षमाकथनं। नारायणपूजाविधिः। चरणोदका दिविधिः। सामान्यतः सर्व्वदेवतातान्त्रिकपूजाविधिकथनं। तत्र विविधन्यासमुद्रोपचारादि विधिकथनं। गुरुपूजनादिविधिः। करमालाविधिः। मणिमालानियमः। मध्यमाङ्गुमालादि विधिः। देवताभेदे मालाभेदकीर्त्तनं। मालासंस्कारादिकथनं। सङ्क्षेपहोमकथनं। जप पदार्थविवेचनं। जपाङ्गविचारः। गुप्तवीजमन्त्रादिकथनं। कवचादिपाठविधिः। निर्म्माल्य धारणविधिः। पञ्चद्रव्यशुद्धिविधानकीर्त्तनञ्च। वैश्वदेवादिविधिः। होमे विहिताविहितद्रव्याणि। हविष्यद्रव्यविवेचनं। अग्न्यभावे अप्सु होमविधिकथनं। पायसवलिविधिः। नित्यश्राद्धविधि। अतिथिपूजाविधिः। सनकादिदानविधिः। गोग्रासविधिः। वामदेव्यगानविधिः। भोजन-विधितत्समयादिनिरूपणं। द्विरशनविधिः। भोजनपात्रविचारः। भोज्याभोज्यविवेचनं। प्रासादादौ भोजननिषेधः। ताम्बूलविधिः। षष्ठयामार्द्धकृत्यनिरूपणं। सन्ध्याकथनं। शयन-विधिः। शय्याविवेचनं। अन्यशय्यायां शयनादिनिषेधः। शयनसमये पठनीयकथनं। दारोप-गमनविधिः। गर्भाधानादिकथनं। रजस्वलाशौचनिरूपणं। पुत्रानुत्पत्तौ उपायकथनं। तत्र दिवसनक्षत्रादिनिरूपणं। द्रव्यगुणकथनं। ऋतुगुणकथनं। रसगुणकथनं। धान्यादिगुणाः। शाकादिगुणः। विविधफलगुणाः। जल-दुग्ध-दधि-तक्र-घृत-गुडादिगुणाः। लशुनादीना-मभक्ष्यता। मत्स्यभोजनविधिः। वैधहिंसायां दोषाभावनिरूपणं। मांसभक्षणविधिः। वृथामांस-भक्षणादौ दोषकथनं। मांसस्य पुरुषार्थचतुष्टयसाधनत्वकथनं। भक्ष्यमत्स्यपक्षिच्छागादिनिरूपणं। भोजनार्हान्ननिरूपणं। शूद्रान्नविवेचनं। प्रतिपदादिक्रमेण कुष्माण्डादिनिषेधः। नवश्रातनवो-दकादिविवेचनं। द्रव्यशुद्धिनिरूपणं। अभ्युक्षणमात्रशुद्धिनिरूपणं। गुडादिशुद्धिकथनं। भोजन-प्रकारकथनं। धर्म्मार्थविवाहफलं। बन्धुहीनस्य संस्कारकरणे फलं। शूद्रान्नादिभोजनदोषकी-र्त्तनं। गार्हस्थ्यधर्म्मनिरूपणं। न्यायोपार्ज्जितधनप्रशंसा। अन्यायोपार्ज्जितधनस्य निन्दाकीर्त्तनञ्च।

---

**No. 2010.** तन्त्रकौमुदी। Substance, palm-leaf 10 × 2 inches. Folia, 112. Lines, 6 on a page. Extent, 2,185 s'lokas. Character, Maithilí. Date, Sk. 1551. Place of deposit, Sáradápura, Post Mádhepura, Darbháñgá, Pandit Vis'vanátha Jhá. Appearance, old. Verse. Correct.

**Tantra-kaumudí.** A digest of Tántric religious duties. By Devanátha S'armá. The work is purely Vaishṇavite, and refers only to those rites and duties which Vaishṇavas recognise. None of the S'ákta rites has been noticed. At the end of the work the author gives a long list of the Tantras, Yámalas, and Pañcharátras he had consulted.

Beginning. वाणीरद्रुमकुञ्जभाजियमुनाकूले तमालद्युति-
र्निर्मुक्ताङ्कुरपक्ष्मलाङ्कविकसद्बिम्बाननो माधवः ।
राधोल्लासविलासविभ्रमलसत्खेदार्द्रगण्डस्थलो-
गोपीभिर्मधुनिर्व्विशेषमनिशं पीतो हरिः पातु वः ॥
श्रीदेवनाथशर्म्मा तनुते खलु तन्त्रकौमुदीमेताम् ।
आगमलीनमतीनामतिहृद्यामखिलतन्त्रेषु ॥
सम्प्रदायविरोधेन सिद्धमप्युज्झितं मया ।
सम्प्रदायानुरोधेन निर्म्माणमपि कथ्यते ॥
अथागमेन प्रामाण्यं विसम्वादिनि धर्म्मतः ।
पञ्चरात्रप्रमाणत्वं रोधकस्यानुरोधतः ॥ इत्यादि ।

End. संहितां वैष्णवीं तद्वत् तत्त्वसागरसंहिताम् ।
संहितां कपिलप्रोक्तां श्रीमन्त+रसंहिताम् ॥
तन्त्रं श्रीभुवनेश्वर्य्या मन्त्रदेवप्रकाशितम् ।
कल्पं श्रीवनदुर्गायास्तन्त्रं सम्मोहनाह्वयम् ॥
हयशीर्षमयमतं सारसङ्ग्रहसङ्ग्रहम् ।
प्रपञ्चसारव्याख्यानं मन्त्रदर्पणमेव च ॥
विज्ञानभारतं तद्वत् श्रीरामार्चनचन्द्रिकाम् ।
मन्त्रनेत्रं चन्द्रिकाया व्याख्यानं यामलत्रयम् ॥
विज्ञानेश्वरसिद्धान्तसारश्रीतन्त्रकाण्यपि ।
विज्ञानललितं पञ्चरात्रं नारायणीमपि ॥
वशिष्ठसंहितां गार्ग्यसंहितां भैरवसंहिताम् ।
दिव्यं सारस्वतं चिच्चन्द्रिकां कामिकमप्यथ ॥
होमावरोपरमन्यं प्रतिष्ठासारसङ्ग्रहम् ।
संहितां वायवीं तद्वत् संहितां ब्रह्मणस्तथा ॥
शम्भोः संहिताश्चैव मन्त्राश्च++र्णि तथा ॥
ईशानसंहितां तद्वत् सिद्धान्तं विश्वकर्म्मणः ॥
तन्त्रं श्रीदक्षिणामूर्त्तेः शतधन्वादिकं तथा ।
व्याख्यानं शारदायाश्च वैशम्पायनसंहिताम् ॥
तथैव त्वरिताज्ञानं स्मृतिशास्त्राण्यशेषतः ।
ज्योतिःशास्त्राणि चालोच्य सकलाः परपद्धतीः ॥
सर्व्वेषां सारमुद्धृत्य देवनाथेन धीमता ।
विधानमिति सम्प्रोक्तं पुरश्चर्य्यादिकर्म्मणः ॥

**Colophon.** चन्द्रबाणस्मरभूमिभूमिते सम्मते शककरापतेर्गते ।
रामनामविदितेन केनचिच्छिर्मिमं लिपिरलिखतायुषा ॥

विषयः । तन्त्रशास्त्रप्रामाण्यव्यवस्थापनं । अत्रमन्त्रादिविवेचनं । राश्यादिविवेचनं । सिद्धादिनिरूपणं । मन्त्राणां कीलादिकथनं । दीक्षाकालादिनिरूपणं । कलावतीदीक्षादिविधिकथनं । दीक्षितस्य नियमादिकथनं । दीक्षायां पूजादिविधिकथनं । पुरश्चर्यादिविधिकथनं । तत्र आसनादिनिरूपणं । मुद्राणां लक्षणादिकथनं । जपमालाविधानं । जपविधिः । विविधमन्त्रनिरूपणं । कौलयोगविधिकीर्त्तनं । दशमन्त्रसंस्कारकथनं । कौलानामाह्निककृत्यविधिकथनं । विशेषेण भूतशुद्धिप्रकारकीर्त्तनं । मातृकादिन्यासविधिकथनं । अर्घ्यशङ्खविधिकथनं । विशेषेण वाह्यपूजाविधिकथनं । तत्र देवताविशेषे पुष्पादिविवेचनं । नैवेद्यादिविधानञ्च । होमविधिकथनं । अग्नेर्दशविधसंस्कारकथनं । मन्त्रसिद्धिविधिकथनं । वीरसाधनविधिकथनं । होमद्रव्यप्रमाणनिरूपणं । कुण्डविधानकीर्त्तनं । मानपरिभाषाकीर्त्तनं । षट्कर्मनिरूपणञ्च ।

---

**No. 2011.** मन्त्रप्रदीपः । Substance, country-made paper, 11 × 4, inches. Folia, 125. Lines, 10 on a page. Extent, 4,640 s'lokas. Character, Maithilí. Date, ? Place of deposit, Naváni, Post Mádhepur, Darbhangá, Pandit Lála Jhá. Appearance, fresh. Prose and verse. Correct.

**Mantra-pradípa.** A Tántric compilation comprising rules for initiation in Tantric rites; mystic mantras, for different gods and goddesses; and rituals for their worship. By Harapati A'gamácharya, son of Ruchipati Mahámahopádhya, and inhabitant of Váijáligráma. His family village was Kháuál. The work was compiled under the orders of Mahárájádhiraja Kañsanaráyana Lakshmínátha Deva, and is divided into 15 chapters. The gods named are partly S'ákta and partly Vaishnavite. No. 717 (II, p. 156), bears the same name as this, but its subject and author are different.

**Beginning.** जगद्गुरुन् नमस्कृत्य नित्यानन्दं महेश्वरम् ।
यस्य स्मरणमात्रेण नृणां सिद्धिर्भवेद्ध्रुवम् ॥
त्रिजगज्जननीमाद्यामच्युतविधिशङ्करैर्वन्द्याम् ।
भवसंग्रामचमीके निखिलासुरघातिनीं चण्डीम् ॥
खौआलाख्यजाता वैजौलीग्रामवासविख्यातः ।
रुचिपतिसूनुः श्रीमान् दीक्षावान् हरपतिर्जयति ॥
श्रीकंसनारायणभूमिपालः सानुग्रहो मे कुरुते निदेशम् ।

मन्त्रप्रदीपं कुरु मत्करं त्वं यद्दर्शने मे भवति प्रमोदः ॥
मूर्द्धा समादाय तदेकदत्तामाज्ञां विविच्याखिलमन्त्रतन्त्रम् ।
यथायथास्थानविधि+मादौ सिद्धादिकं सिद्धिकरं नराणाम् ॥
— — — — — — — — तत्र मन्त्रकरणे विष्णुयामलरुद्रयामलादिसारमुद्धृत्य लिख्यते ।
तत्र विष्णुयामले,— दीक्षां विनोपदेशस्य दुष्टत्वात् प्रथमन्तु सा ।
पापक्षयं दिव्यभावं साधकस्य करोत्यतः ॥ इत्यादि ।

End. कृत्वा प्रणम्य शिरसा उदकेन समर्पयेत् ।
चरणाम्बुजमूले । इति नैवेद्यभक्षणदोषः ।

Colophon. इति समस्तप्रक्रियाविराजमानशिवभक्तिपरायणमहाराजाधिराजश्रीमत्-कंसनारायणश्रीमल्लक्ष्मीनाथदेवनिदेशप्रोत्साहिताज्ञया वेलौलीग्रामवासिविख्यातसौभालग्रामीण-महामहोपाध्यायश्रीरविपतिशर्म्मात्मजागमाचार्य्यश्रीहरपतिविरचिते मन्त्रप्रदीपे पञ्चदशः पटलः समाप्तः । मम पुस्तं हरेद्यस्तु चौरविद्याबलेन वा ।
पिता तस्य भवेत् कुष्ठी माता तस्य च शूकरी ॥ इति ।

विषयः । १, २ये पटले,—दीक्षाया आवश्यकत्वकथनं । सिद्धादिनिर्णयः । अकड-मादिचक्रविधिः । नाडीविधिः । राशिचक्रं । नक्षत्रचक्रं । ऋणधनजिज्ञासा । गणनिरूपणं । कुलाकुलादिविचारः । बालादिभेदः । मन्त्रसंस्कारः । दीक्षासमयदेशगुरुशिष्यादिनिरूपणं । सामान्यदीक्षाविधिः । ग्रहणादिकालीनदीक्षा । नवग्रहहोमविधिः । वागीश्वरी-भुवनेश्वरी-नित्या-दुर्गा-बाला-गणेश-चन्द्र-कार्त्तिक-क्षेत्रपाल-सूर्य्य-वह्नि-हरि-हरादीनां मन्त्रनिरूपणं ।

३—७मे पटले,—सर्व्वदेवताप्राणप्रतिष्ठाविधिः । प्रशस्ताप्रशस्तासननिरूपणं । भूतशुद्धिः । श्रीकण्ठादिन्यासाः । मालाद्रव्यकथनं । जपविधिः । मालासंस्कारप्रयोगादिकथनं । पञ्चन-विधिकथनञ्च शङ्खस्थापनप्रकारः । आवाहनादिमुद्राकथनं । अर्घ्यपुष्पादिविधिः । दीपनिर्म्माण-दोषकथनं । त्रिशक्तिपूजाविधिः । प्रयोगकीर्त्तनञ्च । छिन्नमस्तापूजाविधिः । उग्रताराविधिः । प्रयोगकथनञ्च । उच्छिष्टचाण्डालिनीपूजादिकथनं । सुन्दरीपूजादिकथनं । त्रिपुरसुन्दरीविधिः । कालीपूजाविधिकथनञ्च ।

८—११शे पटले,—नवदुर्गापूजाविधिः । वाग्वादिनीपूजाविधिः । लक्ष्मीपूजाविधिः । शत्रुसंहारिणीपूजाविधिः । अश्वारूढापूजाविधिः । अन्नपूर्णापूजाविधिः । महिषमर्द्दिनीपूजा-विधिः । पूतिनीपूजाविधिः । त्रिपुरभैरवीपूजाविधिः । बालापूजाविधिः । उच्छिष्टमातङ्गी-पूजाविधिः । त्वरितापूजाविधिः । त्रिकण्टकीपूजाविधिः । नित्यक्लिनापूजाविधिः । नित्या-पूजाविधिः । त्रिपुटापूजाविधिः । पद्मावतीपूजाविधिः । दुर्गापूजाविधिः । जयदुर्गापूजाविधिः । मातङ्गीपूजाविधिकथनञ्च ।

१२—१४शे पटले,—गणेशपूजाविधिः । महागणपतिपूजाविधिः । शक्तिगणपतिपूजा-

विधिः। पीताम्बरगणपतिपूजाविधिः। उच्छिष्टगणपतिपूजाविधिः। वटुकभैरवपूजाविधिः चन्द्रपूजाविधिः। सूर्य्यपूजाविधिः। विष्णुपूजाविधिः। वासुदेवपूजाविधिः। लक्ष्मीवासुदेवपूजाविधिः। हयग्रीवपूजाविधिः। दधिवामनपूजाविधिः। रामचन्द्रपूजाविधिः। वाराहपूजाविधिः। धरणीपूजाविधिः। नरसिंहपूजाविधिः। श्रीकरपूजाविधिः। पुरुषोत्तमपूजाविधिः गोपालपूजाविधिः। बालगोपालमदनगोपालादिपूजाविधिः। शिवपूजाविधिः। उमापतिपूजाविधिः। मृत्युञ्जयपूजाविधिः। दक्षिणामूर्त्तिपूजाविधिः। नीलकण्ठपूजाविधिः। अर्द्धनारीश्वरपूजाविधिः। पशुपतिपूजाविधिः। क्षेत्रपालपूजाविधिकथनञ्च।

१५शे पटले,—वटुकनाथपूजाविधिः। चण्डेशपूजाविधिः। अजपापूजाविधिः। मार्त्तण्डभैरवपूजाविधिः। दक्षिणकालीपूजाविधिः। अरिमन्त्रप्रकरणमाल्किकीर्त्तनञ्च। अत्र सर्व्वेव पूजापद्धतिरस्तीति ज्ञेयम्। इति।

---

**No. 2012.** नीलाद्रिमहोदयः। Substance, palm-leaf, 15 × 5 inches. Folia, 196. Lines, 4 on a page. Extent, 4,018 s'lokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Dr. Rájendralála Mitra. Appearance, new. Verse. Correct.

**Níládrimahodaya.** The temple of Jagannátha at Puri, its origin, merits, the images existing there, their worship, feasts and festivals. The work follows closely, but not strictly, the *Purushottama-máhátmya* given in the Padma Puráṇa, but it professes to be an extract from the Súta Sañhítá. It has the alternative name of *Purushottama-máhátmya.*

**Beginning.** नारायणं नमस्कृत्य नरञ्चैव नरोत्तमं।
देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत्॥
तं वेदशास्त्रपरिनिष्ठितशुद्धबुद्धिं चर्म्माम्बरं सुरमुनीन्द्रनुतं कवीन्द्रं।
कृष्णत्विषं कनकपिङ्गजटाकलापं व्यासं नमामि शिरसा तिलकं मुनीनां॥
एकदा नैमिषारण्ये पुण्ये सर्व्वसुखप्रदे।
नानातीर्थसमायुक्ते नानागुल्मसमनोरमे॥
फलपुष्पाद्यवृक्षाणां निकरैः परिसङ्कुले।
नानानीलसमायुक्ते विविक्ते स्वगरञ्जिते॥
तापसाश्रमसङ्कीर्णे स्थावे परमपावने।
तादृशेऽपि वने रम्ये शौनकाद्या मुनीश्वराः॥
तुष्णीभूय समस्तास्ते गोष्ठीं चक्रुर्मनोरमां।

समस्ततीर्थतत्त्वानां ज्ञानाय जगतीतले ।
क्षेत्राणां शिवदानाञ्च जिज्ञासार्थे त्वरान्विताः ॥
सभायां जायमानायां तत्क्षणे च मुनीश्वरः ॥
जटामण्डलधारी च कौपीनधृतसुन्दरः ॥
कृष्णाजिनोत्तरीयेण विराजितवपुर्मुनिः ।
सूतस्तदानीं सम्प्राप्तस्तत्र शिष्यगणैर्युतः ॥
तं दृष्ट्वा परमप्रीताः शौनकाद्यास्तपस्विनः ।
समुत्थाय नमश्चक्रुः सोऽपि तान् दण्डवद्भुवि ॥
तत्र प्रणामं कृतवान् उवाच स तदा मुनिः ।
तमासीनं ततो दृष्ट्वा ऋषयस्ते मुनीश्वराः ।
ऊचुः प्राञ्जलयः सर्व्वे सर्व्वलोकहिताय वै ॥
ऋषय ऊचुः । भगवन् सर्व्वधर्म्मज्ञ सर्व्वतीर्थातितत्त्ववित् ।
अतो ब्रूहि समस्तानां तीर्थानां शिवसम्भृतां ।
क्षेत्राणाञ्च फलं तावत् सूत नः कथयाधुना ॥
तेषां मध्ये वरः को वा क्षेत्राणाञ्च मुनीश्वराः ।
तीर्थानाञ्च तथा ब्रूहि यतस्त्वं व्यासशासितः ।
समारभेत तद्वक्तुं गुह्यं तैः पृष्टमुत्तमं ॥
सूत उवाच । शृणुध्वं मुनयः सर्व्वे संयतात्मान एव हि ।
तीर्थानां क्षेत्रराशीनां मध्ये श्रीपुरुषोत्तमः । .
गुह्यः सर्व्वतमोध्वंसी सर्व्वपुण्यफलप्रदः ॥

End. नैव तेषाञ्च देवानां सन्तुष्टिश्च कदाचन ।
न तेषां मङ्गलं भूमौ प्रष्टणानाञ्च तत्र हि ॥

Colophon. इति सूतसंहितायां नीलाद्रिमहोदये श्रीपुरुषोत्तमक्षेत्रमाहात्म्ये चत्वारिंशत्तमोऽध्यायः ॥

विषयः । अत्र चत्वारिंशदध्यायाः सन्ति । तत्र १मे,—तीर्थानां मध्ये पुरुषोत्तमतीर्थस्य प्राधान्यकथनं । २ये,—कृतयुगे मालवाख्ये देशे अवन्तीनामपूर्य्यां इन्द्रद्युम्नो राजा बभूव इत्यादिवृत्तान्तं । ३ये,—एकाम्रक्षेत्रमाहात्म्यं । ४र्थे,—बलेन भद्रया च युक्तस्य दारुरूपस्य हरेराविर्भावकथनं । ५मे,—इन्द्रादयो देवा ब्रह्मलोकादागत्य दारुरूपस्य हरेः पूजादिकं चक्रु-रित्यादिवृत्तान्तं । ६ष्ठे,—ब्रह्मकृतदारुमयहरिस्तोत्रं । ७मे,—८मे, च ब्रह्मणा इन्द्रद्युम्नाय विष्णोस्त्रिकालपूजाविधिकथनं । ९मे,—आचार्य्यलक्षणकथनं । १०मे,—११शे, च विष्णु-पञ्चोपचारादिकथनं । १२शे.—वारतिथिनक्षत्रविशेषेषु पूजाविशेषकथनं । १३शे,—मया

स्नानविधिः। १४शे,—स्नानोत्सववर्णनं। १५शे,—स्नानोत्सवान्ते पूजाप्रकारकथनं। १६शे,—आषाढस्य शुक्लद्वितीयायां पुरुषोत्तमस्य रथयात्राकथनं। १७शे,—शयनयात्राविधिः १८शे,—दक्षिणायनयात्राकथनं। १९शे,—श्रावणमासामावस्यादिने पुरुषोत्तमस्य अरुणोदय कालपूजाविधिकथनं। २०शे,—प्रासादपूर्व्वस्यां दिशि नारायणरूपेणावस्थितस्य वटवृक्ष पूजाविधिकथनं। २१, २२, २३, २४शे,—भाद्रकृष्णाष्टम्यां श्रीपुरुषोत्तमपूजादिकथनं २५शे,—हरेः पार्श्वपरिवर्त्तनं। २६शे,—वामनजन्मोत्सववर्णनं। २७शे,—शक्रध्वजोत्सववर्णनं २८शे,—पुरुषोत्तमस्य आश्विनमासपूजाविधिः। २९शे,—कार्त्तिकमासपूजाविधिः। ३०शे,—पुरुषोत्तमदर्शनविधिः। ३१शे,—प्रावरणोत्सवविधिः। ३२शे,—पौषमासपूजाविधिकथनं ३३शे,—उत्तरायणपूजाविधिकथनं। ३४शे,—दोलयात्राकथनं। ३५शे,—दमनकयात्राकथनं ३६शे,—वैशाखमासपूजाविधिकथनं। ३७शे,—पुरुषोत्तमयात्रादिकं ये नराः कुर्व्वन्ति तेष पुण्यादिकथनं। ३८शे,—दारुब्रह्मघटनाविधिः। ३९शे,—दारुब्रह्मप्रतिष्ठाविधिः। ४०शे,—प्रतिष्ठान्ते पूजाविधिः॥

---

**No. 2013.** अन्योक्तिशतकम्। Substance, country-made paper, 14 x 3 inches. Folia, 12. Lines, 8 on a page. Extent, 330 s'lokas. Character, Maithílí. Date, ? Place of deposit, Lagmá, Post Vaherá, Darbháṅgá, Paṇḍit Raghunátha Jhá. Appearance, old. Verse. Correct.

**Anyokti-śataka.** Miscellaneous verses in illustration of particular figures of rhetoric. By Mohana S'armá, son of Aniruddha Surí. The subjects of the verses are lions, elephants, sheep, ocean, moon, lotus, bee, kokila, crow, geese, desert, well, river, town, Deva, and S'eshanága.

**Beginning.** तरलाङ्गुलिदलशीलित-शुषिरामधराधरे धृतां मुरलीम्।
कलमालापयदतुलं गोपकुलं तन्नमः कथये॥
अनिरुद्धसूरितनयो मोहनशर्म्मा विदेहदेशीयः।
अन्योक्तिशतकमेतत् कुरुते कमलापतिं नत्वा॥
तत्रादौ सिंहान्योक्तयः।
आतङ्केन मदोत्कटैः करटिभिस्त्यक्तैव भूमण्डली
क्रीडद्भिः कृपणैः करेणुकलभैः क्रान्तः कियत्पौरुषं।
को वेद क्व वसन्ति हन्त शरभाः स्वर्द्दालवो येऽमुना
कः पारीन्द्रपराक्रमस्य विषयो यस्मिन्नसौ जृम्भताम्॥ इत्यादि।

**End.** तुष्णीमुद्वह नागराज वसुधामाधाय धैर्य्ये मनः
स्वच्छन्दं विहरस्व मा पुनरहिष्वन्येष्वसूयां कृथाः॥

एतस्मिन् विषये न केवलमुपालम्भः खमन्तो विधि-
र्यत्नामेव अगम्यथेऽपि विदधे घोरैयमेनाश्रमम् ॥
सिंहदन्तिघनवारिधिचन्द्राः पद्मभृङ्गपिककाकमरालाः ॥
मारवावटनदीनवदेवा-वर्णिता इह हि नागगणेशः ॥

विषयः । अन्योक्त्यलङ्कारध्वनिना प्रास्ताविकाः श्लोकाः निर्मिताः । तत्र सिंह-गज-मेघ-समुद्र-चन्द्र-पद्म-भ्रमर कोकिल-काक-मराल-मरकूप-नदी-वृक्ष-देव-शेषनागोपाख्यः वर्णिताः ।

---

**No. 2014.** सरोजकलिका । Substance, country-made paper, 10 × 3 inches. Folia, 18. Lines, 7 on a page. Extent, 346 s'lokas. Character, Maithilí. Date, ? Place of deposit, Lagmá, Post Vaherá, Darghángá, Pandit Raghunátha Jhá. Appearance, old. Prose and verse. Correct.

**Saroja-kaliká.** Dissertations on various Smriti topics. By Bhásvat Kaviratna. Contents: On the necessity of S'ráddhas. Duties of performers of S'ráddhas. Persons fit to perform S'ráddhas. S'raddhas during the first year after death. S'ráddhas before marriages and other auspicious occasions. Enquiry about death. Collection of bones after cremation. Offering of Pindas. Mourning. Mourning of adopted sons. Merging of mourning. Mourning for infants &c. Enquiry about Sapindas. Purification by bathing. Purification of ground. Ditto of water. Ditto of dressed rice. Ditto from extreme pollution. Ditto of character. Cause of the extension of sin. Injury to life. Expiation for killing cattle. Ditto for great enemies. Ditto for eating food from washermen and others. Ditto for marrying in one's own Gotra. Ditto for incest. Rituals for consecrating cattle. Rules for offering water to the manes. Duties of the twice-born classes. Rules regarding borrowing. Chándráyana and other expiatory rites. Duties of faithful wives. The compilation is obviously a very old one, as its does not quote from, or refer to, any mediaeval digest.

**Beginning.** भास्वता कविरत्नेन प्रयत्नेन स्फुटीकृता ।
सरोजकलिका भाति श्रुतिश्रीकर्णभूषणा ॥
अथ श्राद्धधर्म्मव्यवस्था । हारीतः ।
न तत्र वीरा जायन्ते नारोगा न शतायुषः ।
न च श्रेयोऽधिगच्छन्ति यत्र श्राद्धं विवर्जितं ॥ इत्यादि ।

**End.** विषाचोरवि सा शुद्धा प्रविशेत्मानवेद्दर्म ।
आर्णार्ने मुद्रिता सूद्दे प्रोषिते विमनास्तु या ॥

**Colophon.** इति सरोजकलिका समाप्ता । इति शुभं भूयात् ।

विषयः । श्राद्धावश्यकताकथनं । श्राद्धकर्त्तृधर्म्मनिरूपणं । श्राद्धाधिकारिणः । आशौच-सपिण्डनादिविधिः । आभ्युदयिकश्राद्धनिर्णयः । मरणजिज्ञासा । भुक्तिसञ्चयविधिः पिण्डदानविधिः । अशौचनिरूपणं । स्त्रीमपुत्राद्यशौचं । सन्निपाताशौचं । बालाद्यशौचं सपिण्डादिलक्षणं । स्नानशुद्धिनिरूपणं । भूमिशुद्धिनिरूपणं । उदकशुद्धिः । पक्वान्नशुद्धिः अत्यन्तोपहतशुद्धिः । स्वभावशुद्धिः । पापक्षयहेतुनिरूपणं । हिंसानिरूपणं । गोवधादिप्रायश्चित्तकथनं । महापातकादिप्रायश्चित्तं । रजकाद्यन्नभक्षणादिप्रायश्चित्तं । सर्गोपादिपरिक्षयप्रायश्चित्तं । अगम्यागमनादिप्रायश्चित्तं । वृषोत्सर्गविधिः । तर्पणविधिः । द्विजातीनां विहिताविहितविधिः । ऋणदानादिविधिकथनं । चान्द्रायणव्रतादिकथनं । प्रमीतपतिपत्नीव्रताधर्म्मनिरूपणं । (स्मृतिसङ्ग्रहोऽयमतीव प्राचीनतम इति प्रतिभाति । यतो न कुत्रापि निबन्धकारस्य नामाद्योल्लिखितं दृश्यते ) ।

---

**No. 2015.** दिव्यनिर्णयः । Substance, palm-leaf, 13 × 2 inches. Folia 35. Lines, 4 on a page. Extent, 493 s'lokas. Character, Maithilí. Date, ? Place of deposit, Lagmá, Post Vaherá, Darbháñgá, Paṇḍit Raghunátha Jhá Appearance, old. Prose and verse. Correct.

**Divya-nirṇaya.** A digest of the rules regarding oaths and ordeals. By Dámodara Ṭhakkura. Compiled under the auspices of king Sañgrám Sháh.

**Beginning.** सङ्ग्रामसिंहभूपालाज्ञाम्मानेन सर्वदा ।
दामोदरेण क्रियते दिव्यानामत्र निर्णयः ।
तत्र याज्ञवल्क्यः ।
तुलाग्न्यापो विषं कोशो दिव्यानीह विशुद्धये ।
महाभियोगेष्वेतानि शीर्षकस्थेऽभियोक्तरि ॥ इत्यादि ।

**End.** तप्तमाषकदण्डे च क्रमादेवं प्रकल्पयेत् ॥

**Colophon.** इति महामहोपाध्यायठक्कुरश्रीदामोदरकृतो दिव्यनिर्णयः समाप्तः ॥

विषयः । धर्म्माधर्म्मपरीक्षार्थं तुलाग्निजलादिरूपदिव्यप्रयोगकथनं । तत्र पातकविशेषसम्बन्धे तप्तमाषादिविधिकथनं । ऋतुविशेषे जलादिपरीक्षाविधानकथनं । तत्र शिशिर-हेमन्त-वर्षासु अग्निपरीक्षा । शरद्ग्रीष्मयोः सलिलपरीक्षा । हेमन्तशिशिरयोर्विषपरीक्षा । मार्गशीर्ष-

चेष-नैयाखेषु साधारणपरीक्षाविधिः। कोष्ठपरीक्षायाः साध्यकालिकत्वकथनं। परीक्षायां त्रिविद्दकालकथनं। अथ स्त्रीबालवृद्धातुराणां तुलापरीक्षाविधानं। सूद्रस्य अग्निजलपरीक्षाविधिः। एवं क्षत्रियादिषु विशेषकथनं। पापविषये क्वचिद्विकल्पकथनञ्च। लोयसाहसादिषु लक्षणेन दिव्यविधिनिरूपणं। तत्र तुलादिपरीक्षासु प्रत्येकमितिकर्त्तव्यताकथनं। धर्माद्युदिव्यविधिकथनं। फलविधिकथनञ्च।

---

No. 2016. नाड़ीपरीक्षादिचिकित्साकथनं। Substance, country-made yellow paper, 12 × 4 inches. Folia, 34. Lines, 6 on a page. Extent, 552 s'lokas. Character, Maithilí. Date, ? Place of deposit, Naváni, Post Mádhepur, Darbhángá, Paṇḍit Vañsamaṇi Jhá. Appearance, new. Prose. Generally correct.

**Náḍíparíkshádi-chikitsá-kathana.** Dissertations on the examination of the pulse, and on the treatment of various diseases. By Ratnapáṇi S'armá, son of Gañgolí Sanjívesvara S'armá.

**Beginning.** वन्दे सदानन्दमरन्दसुन्दरं द्विपास्यपादाम्बुजयुग्ममुन्नमन्।
परागपत्नीक्षतभक्तमानसं विपत्तमोहारि पुरारिलालितम् ॥
अथायुर्वेदे नाड़ीपरीक्षादयः।
करस्याङ्गुष्ठमूले या धमनी जीवसाक्षिणी।
तच्चेष्टया सुखं दुःखं ज्ञेयं कायस्य पण्डितैः ॥ इत्यादि।

**End.** नारायणं भजत रे जठरेण युक्ता नारायणं भजत रे पवनेन युक्ताः।
नारायणं भजत रे भवभीतिभीता नारायणात् परतरं किमपीह नास्ति ॥
इति रोगप्रतीकारः पञ्चमो विलासः।

**Colophon.** इति श्रीगङ्गोलीमञ्जीवेश्वरशर्म्मसूनुश्रीरत्नपाणिशर्म्मसंगृहीतनाड़ीपरीक्षादिचिकित्साकथनं समाप्तम्।

विषयः। नाड़ीपरीक्षाविधिः। वातादिप्रभेदनिरूपणं। असाध्यलक्षणं। वातज्वरस्वभावः। एवं पैत्तिकज्वरादिप्रकृतिकथनं चिकित्साकथनं। तत्र ज्वराधिकारे,—द्राक्षादियोगः। दुरालभादियोगः। अर्कादियोगः। कटुफलादियोगः। गुडपिप्पलीयोगः। नवाङ्गयोगः। नागरादियोगाः। पटोलपञ्चकं। अष्टाङ्गभूनकथनञ्च। ज्वरातीसारे,—धान्यपञ्चकादियोगः। हृदङ्गाधरचूर्णं। गुडबिल्वयोगः। आमाधिकारे, बिभीतकावलेहः। आर्द्रपाकादियोगाः। आमवातप्रतीकारकथनं। कामलापाण्डुप्रतीकारः। व्रणप्रतीकारः। प्रमेहप्रतीकारः। छर्द्यावात्मप्रतीकारः। उदरप्रतीकारः। अर्शःप्रतीकारः। स्फुटचरणप्रतीकारः। गण्डमालाप्रतीकारः। कर्णरोगप्रतीकारः। अम्लपित्तप्रतीकारः। वातगुल्मप्रतीकारः। अग्निमान्द्यप्रतीकारः। चक्षुरोगप्रतीकारः। रक्तप्रतीकारः। रक्तपित्त-हिक्काश्वमोदश्वासरीदविकादिप्रतीकारः। रसप्रकरणकीर्त्तनञ्च।

**No 2017**. आचारसङ्ग्रहः। Substance, country-made paper, 12 × ... inches. Folia, 64. Lines, 10 on page. Extent, 2,480 ślokas. Character Maithilí. Date, ? Place of deposit, Navání, Post Mádhepur, Darbhángá Paṇdit Vañsamaṇi Jhá. Appearance, fresh. Prose and verse. Correct.

**Áchára-sañgraha**. A compilation of rules regarding the religious duties of householders. By Ratnapáṇi S'armá, son of Gañgol Sanjiveśvara S'armá.

**Beginning**. नत्वा यच्चरणौ ष्टजत्यविरतं विश्वं विधिः कञ्जतो-
भिन्दुर्नागचयेऽप्यविघ्नमखिलं पात्यच्युतो वामनः।
चोभं वा + मथाधिपः पशुपतिः स्थाणुर्मयत्यसु मे
वाणीसिद्धिकरो विपद्द्रुमहरो लम्बोदरः सुन्दरः॥
आकलय्य बहून् ग्रन्थान् मुनीनां वचनानि च।
आचारसङ्ग्रहो यत्नात् क्रियते रत्नपाणिना॥
तत्रादावपेक्षितमाह। हारीतः।
अज्ञानतमसान्धानां भ्रमितानां कुदृष्टिभिः।
धर्मशास्त्रप्रदीपोऽयं धर्ममार्गोपदेशकः॥ इत्यादि।

**End**. गर्भे पुंसः शुक्रपातात् यदुक्तं मरणावधि।
तदेतस्य महाव्याधेर्मत्तो नान्योऽस्ति भेषजम्॥

**Colophon**. इति गङ्गोलीसञ्जीवशर्मसूनुश्रीरत्नपाणिशर्मकृत आचारसङ्ग्रहः समाप्तः।
बहवः सन्ति च ग्रन्था आचारप्रतिपादकाः।
एकत्र तत्त्वलाभाय मयाऽयं सङ्ग्रहः कृतः॥

विषयः। आचारस्वरूपकथनं। धर्मस्वरूपनिरूपणं। प्रातःकृत्यनिरूपणं। मूत्रपुरीषोत्सर्गविधिः। शौचविधिः। आचमनविधिः। दन्तधावनविधिः। तत्र काष्ठनियमः। प्रातःस्नानविधिः। नैमित्तिकादिस्नानविधिः। सन्ध्योपासनविधिः। प्राणायामविधिः। ऋषिन्यासनिरूपणं। तिलकादिविधिः। तर्पणविधिः। स्नानप्रयोगः। सामगवाजसनेयादीनां स्नानप्रयोगः। वाजसनेयिनां सन्ध्याप्रयोगः। सामगानां सन्ध्याप्रयोगः। वाजसनेयिनां तर्पणप्रयोगः। एवं सामगानां तर्पणादिप्रयोगकथनं। ब्रह्मयज्ञनिरूपणं। पूजाधारादिनिरूपणं। शिवदुर्गासूर्यनारायणादिपूजाविधानं। पुष्पादिविवेचनं। शिवलिङ्गशालग्रामादिमाहात्म्यं। गोमयादिलिङ्गपूजाविधिः। पिष्टपञ्चप्रकारकीर्त्तनं। वैश्वदेवप्रयोगः। नित्यश्राद्धप्रयोगः। गोग्रासदानविधिः। अतिथिपूजनविधिः। भोजनविधिः। मत्स्यमांसादिभक्षणविधिः। अत्र विविधमतविवेचनं। विविधपक्षिपशुप्रभृतिभोजनादौ दोषाभावकथनं। शयनविधिः। सुगन्धिद्रव्यव्यवहारविधिः। गर्भाधानादिविधिः। भ्रूणलक्षणादिकथनञ्च।

**No. 2018. पार्व्वणचन्द्रिका।** Substance, country-made yellow paper, 11 × 4 inches. Folia, 74. Lines, 8 on a page. Extent, 1,752 ślokas. Character, Maithilí. Date, ? Place of deposit, Naváṇí, Post Mádhepur, Darbhángá, Paṇḍit Vañsamaṇi Jhá. Appearance, fresh. Prose and verse. Correct.

**Párvaṇa-chandriká.** On various kinds of S'ráddhas, their peculiarites, and times and modes of performing them. By Ratnapáṇi S'armá, son of Gañgolí Sanjíves'vara S'armá.

**Beginning.** श्रीलम्बोदरपादपद्मयुगलं स्वान्ते निशान्ते दधत्
कुर्व्वे पार्व्वणचन्द्रिकामहमिमां श्रीरत्नपाणिः कृती ।
सन्तोषाय सतां कृपां कलयतां लोकाममोकार्थदा-
मागच्छन्नथ पूर्व्वतोऽधितरणिप्रज्ञातपन्थीकृताम् ॥
अथ श्राद्धकालाः । तत्र याज्ञवल्क्यः ।
अमावास्याष्टका वृद्धिः कृष्णपक्षोऽयनद्वयम् ।
द्रव्यब्राह्मणसम्पत्तिर्विषुवत् सूर्य्यसङ्क्रमः ॥ इत्यादि ।

**End.** ततः पुरोहितं, ब्राह्मणमन्यं वा प्रतिपाद्य स्वाच्छन्द्यं गृहीत्वा पिण्डिकाकोणं विभाज्य श्राद्धीयद्रव्याणि ब्राह्मणाय प्रतिपादयेत् ॥
छन्दोगपार्व्वणविधिरयमलेखि श्रीरत्नपाणिशर्म्मणा नाथि सुरसरिति ॥

**Colophon.** इति गङ्गोलीसञ्जीवेश्वरशर्म्मसूनुश्रीरत्नपाणिशर्म्मसङ्गृहीता पार्व्वणचन्द्रिका समाप्ता ।

विषयः । श्राद्धकालकथनं । श्राद्धावश्यकता । नवोदकश्राद्धादेर्नित्यत्वकथनं । मलमासेऽपि नवोदकश्राद्धस्य कर्त्तव्यतानिरूपणं । व्रीहिपाकश्राद्धं । हैमन्तिकनवान्नश्राद्धं । अत्र नानाग्रन्थकारमतकथनं । श्रीह्यादिपार्व्वणकथनं । अपरपक्षश्राद्धविधिः । मघात्रयोदशीविषये मतभेदविवेचनं । कार्त्तिकामावस्यायां विशेषकथनं । उल्कादानविधिः । दीपदानविधिः । लक्ष्म्यादिपूजाविधिः । पार्व्वणपदार्थविवेचनं । अमावस्याश्राद्धकालविवेचनं । अनुपनीतादिकृतश्राद्धनिरूपणं । अपात्रकपार्व्वणविधिः । महालयादिव्यपदिकथनं । सामान्यतः श्राद्धकरणवेलानिरूपणं । अत्र मतभेदविवेचनं । काम्यश्राद्धविधानं । मन्वन्तरायुगाद्यादिनिरूपणं । तर्पणप्रशंसा । कृष्णत्रयोदशीश्राद्धनिषेधकीर्त्तनं । तीर्थश्राद्धविधिः । पितृणां ध्यानविधिकथनं । श्राद्धक्रियाविवेचनम् । तत्र सङ्कल्पवाक्यावमनमार्ज्जनासनपरिवेषणपात्रवस्त्रदीपादिनिरूपणं । परकीयगृहे श्राद्धकरणविधिः । श्राद्धनिषिद्धानि । अपुत्रस्य न पार्व्वणश्राद्धमिति निरूपणं । उपवीतविचारः । द्रव्यपरिभाषाकीर्त्तनं । श्राद्धदिनवर्ज्जनीयानि । पार्व्वणप्रयोगकथनं । श्राद्धीयद्रव्यप्रतिपत्तिकथनञ्च ।

———

**No. 2019.** क्षयमासादिविवेकः। Substance, country-made paper, 12 × 3½ inches. Folia, 32. Lines, 8 on a page. Extent, 604 ślokas. Character Maithilí. Date, ? Place of deposit, Naváni, Post Mádhepur, Darbháṅgá Paṇḍit Vañsamaṇi Jhá. Appearance, fresh. Prose and verse. Correct.

**Kshayamásádi-viveka.** On intercallary and elided months, the mode of reckoning the same, and duties appertaining to, and prohibited at, such times. By Ratnapáni S'armá, son of Gaṅgolí Sanjíves'vara S'armá. The work was compiled during the reign of Chhatra Siṅha of Mithilá. The author, in his introduction, gives a long list of the digests he had consulted.

**Beginning** वन्दे सदानन्दमरन्दसुन्दरं द्विपाननपादाम्बुजयुग्ममुत्तमम्।
परागपूतीकृतभक्तमानसं विपन्नमोहारि पुरारिलालितम्॥
स जयति बाहादुरोऽयं मिथिलेशः श्रीक्षत्रसिंहनामा।
जितरिपुरथो मनोजा दानन्यक्कृतकर्णकीर्त्तिः॥
अवाप्य यस्य स्वरसं जीविकां विदेहदेशागतरत्नपाणिः।
द्विसंक्रमस्यास्य द्विज+जः क्रमात् तनोमि सिद्धान्तविचारसञ्चयम्॥
आलोचनीयः सुधिया धियाऽसावेकीकृतः सम्प्रति रत्नपाणेः।
याचस्पतीत्यादिकृतानुपूर्व्वीं गुर्व्वीकृतात्मा सविशेष एषः॥
कुर्व्वन्तु राज्ञामनन्तपण्डिता निर्जं.निर्जं खिद्यन्ति वा न मे मनः।
अनक्षुणा ये तु द्विरेफकाः प्रियाः पुरे पुरे दौहिदयन्ति वाग्भरैः॥

अथ कृतकतिविधविन्तामणिकृत्यमहार्णवादिग्रन्थापरवाचस्पतिशावचस्पतिमिश्रकृतद्वैतपरिशिष्टादितुहकेश्वरकेशवमिश्रवडविधटीकापद्धतरीकृतन्यायपरिकरापरकल्पितिथितत्त्वचिन्तामणिमलमासमारिण्यादिग्रन्थसम्भवगौरवगुरुतरनिजकल्पितवर्द्धविधाचारगीयमानयशःसारश्रीमत्क्षेमचरितवल्लिमिथिलेशमहामहोपाध्यायमहुक्कुमेहेशकृतस्मृतिविवेकवर्द्धमानवर्द्धमानोपाध्यायतर्कपण्डरीकप्रकाशमार्त्तण्डकृतव्यवहाराद्वैतनिर्णयातिभक्तिमुक्तिते।षितश्रीमरहरिनरहर्य्युपाध्यायविविधग्रन्थकारहद्धीकृतनिजकल्पितमासमीमांसाप्रकृतविचारतर्कापरगोत्रमगोकुलनाथोपाध्यायप्रभृतिमहाजनदर्शितमार्ग्गवत् समीकृतमपहाय पथं कापथ गन्तमुत्सुका वहवः क्षयमासपदादरव्याख्यातत्परदेशीयपथं समस्तं कारं कारं महान्तो मितान्तं क्रियन्तो विवदन्ते तत्+ते नेति विद्मो वयम्। इत्यादि।

**End.** जानन्तोऽपि वावदूका विवदन्ते वहवोऽन्यदेशीयाश्चेत् का नो हानिरितिहदेशीयाः केऽपि नैवं भूता भवन्त्वित्येव तात्पर्य्यमिति कृतमतिविस्तरेण॥

**Colophon.** इति गङ्गोलीसञ्जीवेश्वरशर्म्मसूनुश्रीरत्नपाणिशर्म्मसंगृहीतक्षयमासादिविवेकः समाप्त इति ।

विषयः । क्षयमासपदार्थविवेचनं । तत्रत्यकीर्त्तनञ्च । अथ विविधमलमासवर्णनं । मलमासस्वरूपविवेचनम् । क्षयज्ञातत्वनामां तत्यादिनिरूपणं । क्षयमाससम्भावनाकालादिनिरूपणं । मासलङ्घितमासनिरूपणं । मलमासकृत्यनिरूपणं । अथ विविधमयसम्बादकीर्त्तनं । मलमासमांशादिभक्षणविधानकीर्त्तनं ।

---

**No. 2020. एकोद्दिष्टसारिणी ।** Substance, country-made yellow paper, 11×3 inches. Folia, 35. Lines, 8 on a page. Extent, 782 ślokas. Character, Maithilí. Date, ? Place of deposit, Naváṇí Post Mádhepur, Darbháṅgá, Paṇḍit Vaṅśámaṇí Jha. Appearance, fresh. Prose and verse. Correct.

**Ekoddishṭa-sáriṇí.** On the first annual śráddha and the rules and rituals appertaining thereto. By Ratnapáṇí S'armá, son of Gaṅgolí Sañjívesvara S'armá.

**Beginning.** श्रीश्वेरम्मपदारविन्दयुगलध्यानात्तभानुप्रभा-

प्रद्योतात्ययमन्दिरो नतकरो धीरे कृपासागरे ।

वेदेशाधिपसम्मुदे हि विविधपन्थावलोक + +

मेकोद्दिष्टविचारणं प्रकुरुते श्रीरत्नपाणिः सुधीः ॥

अथ व्यासः । मासपक्षतिथिस्पृष्टे यो यत्र म्रियतेऽहनि ।

प्रत्यब्दन्तु तथाभूतं क्षयाहं तस्य तद्विदुरिति ।

अतएव मासपक्षतिथ्याद्युल्लिखितं सङ्कल्पवाक्यमनायाति । न तु पार्व्वणे अस्य क्षयाहप्रकरणीयत्वात् । इत्यादि ।

**End.** कृतैषा सारिणी यत्नादेकोद्दिष्टविधायिनी ।

श्रीरत्नपाणिकृतिना गच्छता नापि पूर्व्वतः ॥

विघ्नं हरन्तु हेरम्बचरणाम्बुजरेणवः ।

**Colophon.** इति गङ्गोलीसञ्जीवेश्वरशर्म्मसूनुश्रीरत्नपाणिशर्म्मसंगृहीता एकोद्दिष्टसारिणी समाप्ता ।

विषयः । क्षयाहनिरूपणं । तत्र श्राद्धाकरणे प्रत्यवायकथनं । अमावस्यादौ मृतस्य क्षयाहे एकोद्दिष्टमेव कर्त्तव्यं न तु पार्व्वणमिति निर्णयः । श्राद्धदिने अशौचपाते विधानं । अशौचविवेचनञ्च । एकभक्तादिनियमकीर्त्तनं । मृताशौचादौ विधिः । एकोद्दिष्टं पाकेनैव कर्त्तव्यमिति निरूपणं । प्रातर्मुहूर्त्तसङ्कटपरो, हिङ्ग्वादिकालनिरूपणं । मलामासेऽपि कर्त्तव्य-

मितिनिरूपणं। एकस्मिन् दिने बधाच्च निमित्तश्राद्धादिप्रतिबन्धश्राद्धयोः कर्त्तव्यत्वे विधिनिरूपणं एवमेकस्मिन् दिने मृतयोः पित्रोः श्राद्धविधिकीर्त्तनञ्च। सौरचान्द्रमासविवेचनं। मलमासेऽपि नित्यनैमित्तिकश्राद्धकरणावश्यकतानिरूपणं। अत्र विविधमतकीर्त्तनञ्च। पाकस्य श्राद्धाङ्गतादि- निरूपणं। एकोद्दिष्टे प्रतिनिधिर्नास्तीतिनिरूपणं। शूद्रेण तु सर्व्वेषामामेन श्राद्धकर्त्तव्यता श्राद्धदिननिषिद्धानि। सर्व्वैरेव भ्रातृभिरेकोद्दिष्टं कार्य्यमितिकथनं। अमावास्यादिमृतस्यापि पितुर्मध्याह्ने एकोद्दिष्टं विधायापराह्णे पार्व्वणं कर्त्तव्यमितिनिरूपणं। दक्षिणावामदेवागमादिवि- धिकथनञ्च।

---

**No. 2021.** ज्योतिःसारसमुच्चयम्। Substance, country-made paper, 12 × 3 inches. Folia, 62. Lines, 7 on a page. Extent, 1,494 ślokas Character, Maithilí. Date, ? Place of Deposit, Naváni, Post Mádhepur Darbhángá, Paṇḍit Lála Jhá. Appearance, fresh. Prose and verse. Correct

**Jyotihsára-samuchchaya.** On auspicious and inauspicious conjunctions of stars and planets with reference to the performance of civil rights, such as marriages &c. By Viśveśvara Daivajṇa.

**Beginning.** ज्योतिर्निबन्धानालोक्य व्यवहारोपपत्तये।
तदुद्धारेण क्रियते ज्योतिःसारसमुच्चयः॥
यथा शिखा मयूराणां नागानां मणयो यथा।
तद्वद्वेदाङ्गशास्त्राणां ज्योतिषं मूर्द्धि वर्त्तते॥
विफलान्यन्यशास्त्राणि विवादस्तेषु केवलम्।
प्रमाणं ज्योतिषं शास्त्रं चन्द्रार्कौ यत्र साक्षिणौ॥
तत्र लग्नादिभावनिरूपणं। इत्यादि।

**End.** यानं परो निपतितं हरती च कन्या गर्भेण चातिमहती पुरतः स्थिता स्त्री।
आगच्छति प्रविश गच्छसि वा किमर्थं शब्दाः स्थिराय गमनं प्रतिषेधयन्ति॥

**Colophon.** इति गणककुलनलिनदिनेशश्रीविश्वेश्वरदैवज्ञकृतौ ज्योतिःसारसमुच्चयः समाप्तः।

विषयः। लग्नादिभावनिरूपणं। पञ्चविवेचनं। चन्द्रताराादिशुद्धिः। देशाचारादिशुद्धिः। समयाशुद्धिविवेचनं। सतीचारादिप्रतिप्रसवः। कन्याया वर्षशुद्धिः। कन्यालक्षणादिकथनं। वरलक्षणादिकथनं। परिवेदनविचारः। विवाहसमयादिनिरूपणं। द्विरागमनं। जातकर्म्म। नामकरणान्नप्राशनचूडाकरणकर्णवेधविद्यारम्भोपनयनादिकथनं। धनुर्विद्या। पञ्चशान्तिः। अद्भुतशान्त्यादिशान्तिः। जलाशयादिप्रतिष्ठा। बीजवपनं। नवान्नं। मत्स्यमांसविधिः। वास्तु- विधिः। यात्राचिन्ता। मङ्गलनिरूपणञ्च।

---

**No. 2022. सुबोधिनी ।** Substance, country-made paper, 13 × 5 inches. Folia, 250. Lines 9 on a page. Extent, 4,562 ślokas. Character, Maithilí. Date, ? Place of deposit, Naváṇi, Post Mádhepur, Darbháṅgá, Paṇḍit Vaṅsamaṇí Jhá. Appearance, fresh. Prose and verse. Generally correct.

**Subodhiní.** A Smṛiti digest, containing dissertations on the ten Saṅskáras, marriages of daughters, śráddhas of various kinds, and domestic duties. By Ratnapáṇí S'armá, son of Gaṅgoli Sanjívésvara S'armá. The work was compiled by order of king Rudra Siṅha of Mithilá.

**Beginning.** अन्वयेन जगतां हि कारकं तारकं विपदि विघ्नवारकम् ।
अभिधाय हृदि तन्यते कृते रत्नपाणिकृतिना सुबोधिनी ॥
देशे देशे च दातुर्विलसति सुयशःसोमसोमातपत्रं
यस्याखण्डप्रतापो दहति रिपुकुलारण्यमेवानलोऽग्नौ ।
यत्पार्श्वे वेदपादैर्निवसति सुकृतं पार्श्वतीशाङ्घ्रिभक्त्या
वीरः श्रीरुद्रसिंहो जयति नृपमणिश्रीरभक्तैकभूपः ॥
कुर्व्वे तस्य निदेशतो नृपमतेः कल्याणमूर्त्तेरिमाम्
पारम्पर्य्यसमागतव्यवहृतिप्रज्ञासमाज्ञादरीम् ।
सन्त्वन्यच निरङ्कुशा हि कवयो मैवं ततस्तत्र किं
वैदेहस्थितपण्डितौघकवणाहृष्टिस्तदा चेत् परम् ॥
श्रृण्वन्तु सन्तो विनयं मदीयं कुर्व्वन्तु + + मम लोलतायाः ।
कृतार्थता मज्जनुषो यथा स्यात् पश्यन्तु मात्सर्य्यमपास्य चैताम् ॥
अथाश्रमावश्यकतायां दक्षः ।
अनाश्रमी न तिष्ठेत्तु दिनमेकमपि द्विजः । इत्यादि ।

**End.** आश्विनकृष्णचतुर्द्दश्यां तिथौ अमुकगोत्रस्य पत्युरमुकदेवशर्म्मण एकोद्दिष्टश्राद्धमहं करिष्ये । इति सङ्कल्पं कुर्य्यात् । अद्यामुकगोत्र पते इदमासनं ते नम इत्येवमादिना-सनादिदानं । एवमेव शूद्रकर्त्तृकैकोद्दिष्टश्राद्धप्रयोगो ज्ञेयः ।

**Colophon.** इति गाङ्गोलीश्रीसञ्जीवेश्वरसूनुश्रीरत्नपाणिसङ्कलिता सुबोधिनी समाप्ता ।

विषयः । आश्रमस्यावश्यकताकथनं । गार्हस्थ्याश्रमस्य श्रेष्ठत्वकथनं । कीदृशी कन्या विवाह्येतितन्निरूपणं । कन्यादानविवेचनं । परिवेत्रादिविवेचनं । कन्यादानाधिकार्य्यादिनिरूपणं । वाग्दानादिविवेचनं । गान्धर्व्वविवाहविधिकथनं । कन्यादानप्रयोगादिकथनं । स्त्रीशुद्धिनिरूपणं । एवं क्रमेण दशसंस्कारविधिकथनं । प्रयोगकथनञ्च । मुमूर्षुकृत्यनिरूपणं । तत्र वैतरणीदानादिप्रयोगकथनं । एवं परत्र सर्व्वत्र प्रयोगकथनमिति ज्ञेयं । दाहादिविधिकथनं । ततः आम-

श्राममकथनं । प्रेतप्रवेशविवेचनं । पर्व्वमरणदानविधिः । दशपिण्डदानविधिः । प्रेततर्पणविधिः नीरक्षीरदानविधिः । श्राद्धश्राद्धविधिः । अशिवाचविचारः । अथ श्राद्धविधिः । अशौचादि मदिराक्षत्यविधिः । क्षौरविधिः । वृषोत्सर्गविधिः । श्राद्धादौ मांसादिदानविवेचनं । तत्र भक्ष्या भक्ष्यमांसादिविवेचनञ्च । द्विजदम्पतीदानादिविधिः । कपिलादिदानविधिः । मासिकश्राद्ध विवेचनं । षोडशश्राद्धानि । सपिण्डीकरणविवेचनं । चतुर्थीश्राद्धविधिः । पार्व्वणश्राद्धविधिः स्त्रीकर्तृकश्राद्धविधिकथनञ्च ।

---

**No. 2023.** मिथिलेशचरितम् । Substance, country-made yellow pape 12 × 4 inches. Folia, 36. Lines 10—12 on a page. Extent, 1,264 ślokas. Cha racter, Maithilí. Date, ? Place of deposit, Naváṇí, Post Mádhepu Darbhángá, Paṇḍit Vañsamaṇí Jhá. Appearance, new. Verse. Incorrect.

**Mithileśa-charita.** Mithilá, its extent, character, history, sove reigns, and the manners, customs, and habits of its people. The histor comprises the reigns of nine rájás beginning with Maheśvara Ṭhakkura who obtained the rájáship of the district from an emperor of Delh By Ratnapáṇí S'armá, son of Gañgoli Sanjíveśvara S'armá. The autho was a Drávida Bráhmaṇ, and wrote the work under the instruction o Rámachandra Miśra, at Calcutta. Nos. 2009, 2016, to 2020, 2022, 202 and 2032 are also due to him.

**Beginning.** वन्द्यं वेद्यं गणेशाणं प्रधानं जगतामजं ।
विघ्नहारं दयोदारं सारं तारं भजे मुदः ॥
द्रविड़देशी सुखवासी निगमविलासी रामचन्द्रमिश्रः ।
तत् प्रश्नोत्तरसारं लिखति विचारं रत्नपाणिः ॥
कलिकत्ताभिधनगरे स्थित एवैष प्रयागराशिरद्विजः ।
वंशावली च रीतिर्निरूपीच मिथिलेशानां ॥
मिथिलादेशो यत्रोऽस्ति कीदृशः कोऽवधिस्तनः ।
आचारः कीदृशो धीर कीदृशा मनुजा अपि ॥
कोऽस्ति सम्प्रतिभूपस्तु कीदृशं तत्कुलं वद ।
इत्यमन्यच्च यच्छ्राव्यं रत्नपाणे निगद्यतां ॥
रामचन्द्र शृणु त्वं हि यथाप्रश्नं तदुत्तरं ।
मिथिलाश्याऽथ भूपोऽभूत् पालितक्षेम यत् पुरा ॥
तन्नाम्ना चिक्रिततस्माम्मिथिलादेश उच्यते । इत्यादि ।

End. एवं विधानि हृत्तानि सर्व्वमोक्षप्रदानि च ।
कति चासन्नस्वपतेः सर्व्वत्र विदितानि वै ॥
कथितानि च तुभ्यं भो कानिचित् प्रश्नवाक्यतः ।
अतः परन्तु वक्तुं मे समयो नास्ति सम्प्रति ॥
कालान्तरे रामभिश्र श्रोतव्यं पुनरागमे ।
ततः कृतार्थो रामोऽसौ वदन्निति ययौ गृहं ॥
एतावदपि श्रुत्वा मे अत्यन्ताफलम्भायायो ।
सुधापाने न कस्यापि तृप्तिर्भवति कुत्रचित् ॥

Colophon. इति गाङ्गोलीसञ्जीवेश्वरशर्म्मसूनुश्रीरत्नपाणिशर्म्मकल्पिते श्रीमिथिलेशचरिते + + + + + + + + प्रकरणम् ॥

विषयः । मिथिलामाहात्म्यकथनं । मैथिलानामाचारादिकथनं । अधुनातनमहाराजस्य पूर्व्वजानां प्रत्येकं जीवनीकथनं । तत्र प्रथमतः महेश्वरठक्कुरो दिल्लीश्वरात् यथा मिथिलाराज्यं लब्धवान् तद्वृत्तान्तकथनं । महेश्वरादारभ्य नवमपुरुषपर्य्यन्तं राज्ञां वृत्तान्तकीर्त्तनं ।

---

No. 2024. ग्रहलाघवं वा सिद्धान्तरहस्यम् । Substance, country-made paper, 11 × 5 inches. Folia, 34. Lines, 6 on a page. Extent, 465 ślokas. Character, Nágara. Date, Sm. 1850. Place of deposit, Calcutta, Government of India. Another copy at Kanhaulí, Post Madhuvaní, Darbhángá. Paṇḍit Lalita Jhá. Appearance, old. Verse. Correct.

**Grahalághava** *alias* **Siddhánta-rahasya**. Astronomical calculations, regarding all the leading subjects of the science as known to the Hindus. By Gaṇeśa Daivajṇa, son of Keśava Sámvatsara.

Beginning. ज्योतिःप्रबोधजननी परिशोध्य चित्तं
तत् सूक्ष्मकर्म्मचरणैर्गणनार्थपूर्णा ।
स्वल्पाक्षरापि च तदंशकृतैरपायै-
र्य्यल्लीकृता जयति केशववाक् श्रुतिश्च ॥
परिभग्नसमीरर्व्विकेशचापं दृढगुणहारलसत्सुकल्पवाक्यम् ।
सुफलप्रदमात्मप्रभं तत् स्मर रामं करणश्च विष्णुरूपम् ॥
यद्यप्यकार्षुर्वरवः करणानि धीरा लेषु + + धनुरपास्य न तिद्धिरस्मात् ।
ज्याचापकर्म्मरहितं सुलघुप्रकारं कर्त्तुं ग्रहप्रकरणं स्फुटमुद्यतोऽस्मि ॥
द्वाभ्यामिन्द्रोनितशक ईशहृत् फलं स्याच्चक्राख्यं रविहृतशेषकश्च युक्तम् ।
चैत्राद्यैः पृथगुरुतः सहघ्नचक्रादिग्युक्तादमरफलाधिमासयुक्तम् ॥ इत्यादि

**End.** पूर्व्वैः प्रौढ़तराः क्वचित् किमपि यच्चक्रुर्यगुर्व्व्यैः विना
ते तेनैव मयातिगर्व्वकुमुदद्युक्ते धिरोचम्भि चि।
सिद्धान्तोक्तमिचाखिलं लघुकृतं चित्वा धनर्व्वै मया
तद्भर्व्वा मयि मास्तु किं न तदहं मव्याक्तता इवधीः॥
नन्दिग्राम इत्यापरान्तविषये श्रिष्यादिगीतस्तुति-
र्योऽभूत् कौशिकवंशजः सकलसच्छास्त्रार्थवित् केशवः।
सूनुस्तस्य तदङ्घ्रिपद्मभजनात्तज्ज्ञावबोधांशकः
स्पष्टं ह्यविचित्रमल्पकरणं चैतद्गणेशोऽकरोत्॥

**Colophon.** इति श्रीसकलागमाचार्य्यपर्य्यश्रीकेशवसांवत्सरात्मजश्रीगणेशदैवज्ञविरचि ग्रहलाघवाख्यं सिद्धान्तरहस्यं समाप्तम्। संवत् १८५०।

विषयः। अहर्गणानयनप्रकारकीर्त्तनं। सूर्य्यचन्द्रतुङ्गादीनां ध्रुवककथनं। सूर्य्यादी क्षेपककथनं। ध्रुवक्षेपकसंस्कारकथनं। मध्यमरविबुधशुक्रचन्द्रसाधनं। चन्द्रानयनं। चन्द्र पातानयनं। राहोरानयनं। भौमबुधकेन्द्रसाधनं। गुरुभृगुकेन्द्रसाधनं। शुक्रकेन्द्रानय शनेरानयनं। रविचन्द्राद्यगतिकथनं। राहुभौमादीनां गतिकलानिरूपणं। इगणितैक्यसंर पर्नं। भुजसाधनविधिः। चरसाधनं। चरानयनं। चन्द्रस्फुटीकरणं। चन्द्रमन्दफलसाध चन्द्रगतिसाधनं। तिथिनक्षत्रयोगकरणसाधनं। भौमादीनां शीघ्रफलाङ्ककथनं। एषां मन्द फलसाधनञ्च। मन्दस्पष्टगतिसाधनं। कुजबुधशुक्राणां गतौ विशेषकथनं। भौमादीनां च शीघ्रकेन्द्रभागकथनं। कुजगुरुशनीनामुदयभागकथनं। बुधशुक्रयोरुदयास्तभागकथनं। वक्रमा द्दिनमानकथनं। मेषादिराशीनां लङ्कोदयकथनं। लग्नसाधनं। गोलानयनप्रकारः। प शसाधनं। नतोन्नतसाधनं। अक्षकर्णसाधनं। इष्टच्छायासाधनार्थं चारकथनं। भाज्यसाध कर्णाद्यानयनं। क्रान्तिसाधनं। क्रान्तिभागेभ्यो भुजभागानयनं। रवेरस्थाने दिनमानादेव क्रा साधनं। दिनार्द्धे नतांशोन्नतांशसाधनं। मध्यकर्णसाधनं घटीस्थानसाधनं। नलिकादिबन्ध दिक्साधनकथनं। भुजकोटिकर्णनलिकासंस्थानकथनं। चन्द्रग्रहणनिरूपणं। खण्डग्रासादि रूपणं ग्रहणस्थितिसाधनं। स्पर्शमोक्षस्थितिसाधनं। जालग्रहदर्शनार्थं नलिकानिवेशविधि भूच्छायासाधनादिकं। मध्यग्रहणस्पर्शकालमोक्षसम्मीलनोन्मीलनकालसाधनं। ग्रस्तोदयादौ साधनं। सूर्य्यग्रहणं। लम्बसाधनं। वर्णस्थानादिकथनं। ग्रहणद्वयसिद्धिः। इष्टादिसाध तिथिसाधनं। छन्नानयनं। चन्द्रबिम्बभूभासाधनं। गुरुशुक्रादीनामुदयास्तसाधनं। मन्दस्पष्ट साधनं। नतांशसाधनं। दृक्कर्मसाधनं। नक्षत्रध्रुवककथनं। अक्षदृक्कर्मकथनं। खमध्य नक्षत्राद् रविस्थानकथनं। नक्षत्राणां छायायन्त्रेण रविस्थानं। शृङ्गोन्नतिदिक्स्थानसाध ग्रहयुतिस्थानं। पातसमयादिस्थानसाधनं। पितृसाधनं। नक्षत्रसाधनं। योगसाधनादिकं। ग साधनं। ग्रामसाधनं। अहर्गणग्रहादिसाधनञ्च।

---

**No. 2025. ग्रहलाघवटीका।** Substance, country-made paper, 12 × 5 inches. Folia, 96. Lines, 13—14 on a page. Extent, 3,030 ślokas. Character, Nágara. Date, Sm. 1853. Place of deposit, Kanhauli, Post Madhubaní, Darbháṅgá, Paṇḍit Lalita Jhá. Another copy at Calcutta, Government of India. Appearance, old. Prose. Generally correct.

**Grahalághava-ṭiká.** A commentary on Gaṇeśa Daivajna's *Grahalághava* alias *Siddhánta-rahasya* (*ante*, No. 2024). By Mallári Daivajna, son of Divákara Daivajna.

**Beginning.** शाके न.केशमुख्याः सुरवरनिवहाः सन्ति येऽनन्तसंख्या-
नाख्यामाख्यात्यमीषां कथमपि च मनःपूर्व्वकं वाङ्मदीया।
एकं विश्वैकदक्षं सकलसुरशिरःसंघसङ्घर्षिताङ्घ्रिं
शीघ्रं भक्तेष्टसिद्धिप्रदमिह हि सुरं सादरं तं नमामि॥
मल्लारिं कुलनायकं रविमुखान् + + ; स नत्वा गुरोः
स्मृत्वा पादयुगं च्यवाप्य च ततः किञ्चित्सुबोधात्मकं।
मल्लारिर्ग्रहलाघवस्य कुरुते टीकां लसद्वासनां
यस्मादल्पमतिश्च कुण्ठितमतिः स्यात् पूर्व्ववैचित्र्यतः॥
मध्यस्फुटास्तोदयनक्षपूर्व्वं कर्म्माखिलं यद्गणिते खगोत्थं।
जीवा धनुःसंश्रयकं विना ते न स्यादयं निश्चय एव गोले॥

— — — — — — — — — — — — अथ श्रीमज्जलधितटनिकटस्थितनानोपवनविराजितनन्दिग्रामाभिधनगरनिवासिसकलभूपतिसेवितचरणयुगलकमलगणिताटवीविघटनपटुतराखिलदैवविन्मातङ्गकुम्भपीठलुठनोत्कण्ठकण्ठीरवश्रीमदुमारमणचरणद्वयपङ्कजावाप्तमहामतिविभवदैववित् केशवदैवज्ञात्मजाः गणेशदैवज्ञवर्य्यचर्य्याः ग्रहलाघवाख्यं ग्रहप्रकरणं चिकीर्षवस्तत्रादौ निर्व्विघ्नेन ग्रन्थसमाप्तिप्रचयगमनाभ्यां शिष्टाचारपरिपालनाय च — — — — — — — वस्तुनिर्द्देशरूपमङ्गलमश्चितं ग्रन्थारम्भं वसन्ततिलकावृत्तेनाह, ज्योतिरिति।

**End.** अकरोत् कृतवानित्यर्थः। इति पूर्व्वशाकांशाद्ग्रहानयनप्रकारः। ग्रन्थालङ्कारस्य कृतः॥

**Colophon.** इति श्रीमद्गणकचक्रचूडामणिदिवाकरदैवज्ञसुतमल्लारिदैवज्ञविरचितायां ग्रहलाघवटीकायां ग्रन्थसमाप्त्यलङ्कारव्याख्यानं समाप्तं।

देशे पार्थसमाह्वयेऽतिरुचिरे तीरे च गोदोत्तरे
गोलग्रामपुरे मुरारिचरणार्च्चासक्तविद्वद्युते।
आसीत्तत्र दिवाकरोऽतिचतुरो + दैवसङ्घाग्रणी-
र्विश्वेशे सततं यदीयहृदयं यस्तस्य पुत्रोऽकरोत्॥

मन्नारिर्गणकाग्रणीर्गुणपदद्वन्द्वाब्जभक्तो रतो
लब्ध्वा बोधलवं ततो हि विहितं स्वार्थोपपत्तिं स्फुटां।
वर्य्यस्य ग्रहलाघवस्य गणकश्रीमद्गणेशाभिध-
प्रोक्तस्याथ कृपालवो हि सुधियः पश्यन्तु तुष्यन्त्विमां॥
बाणोनाच्छकनः कुमारविहतास्मूलं हि मासः सयुग-
बाणैर्भैर्हृद्गोनिताद्दिनमिति(?) तस्याद्दलं(?) स्यात्तिथिः।
पक्षः स्यात्तिथिसङ्ख्यतोऽखिलयुतिः सप्ताप्तितिथ्युन्मिता
चैताल्लो गणको लिलेख च तदा टीकां परार्थामिमां॥
संवत् १८५१। भाद्रमासशुक्लपक्षतिथि ६ शनिवासरे। शुभम्।

विषयः। गणेशदैवज्ञकृतसिद्धान्तरहस्यापराभिधानग्रहलाघवस्य व्याख्यानम्।

---

**No. 2026.** श्राद्धरत्नम्। Substance, country-made paper, 14 × 4 inch Folia, 72. Lines, 8 on a page. Extent, 1,916 ślokas. Character, Maithi Date, ? Place of deposit, Vehaṭ, Post Mádhepura, Darbháñgá, Paṇḍ Phaṇidhara Miśra. Appearance, fresh. Prose and verse. General correct.

**Śráddha-ratna.** A summary of the rules regarding śráddha By Lakshmípati, disciple of Indrapati.

**Beginning.** वदनविनिर्जितचन्द्रं गञ्जितमक्रं नगोद्धरणात्।
गोपीवृन्दवियोगं बालमुकुन्दमहं कलये॥
प्रणम्य भारतीकान्तं श्रीमदिन्द्रपतिं गुरुम्।
श्रीलक्ष्मीपतिधीरेण श्राद्धरत्नं विधीयते॥

अथेदानीन्तना जनाः क्रिया + + यावदेवं कुर्व्वन्ति तावदेव छन्दोगानां वाजसनेयिनां प्रति + + लोकाः श्रीदत्तोक्तश्च प्रयोगो लिख्यते। तत्र प्रथमं भूसंस्कारः। इत्यादि।

**End.** श्राद्धशेषमन्नमिष्टैः सह भुञ्जीत इति। वाजसनेयिनां पार्व्वणप्रकारोक्तो विधि प्राप्य इति॥

**Colophon.** इति समाप्तोऽयं ग्रन्थः।

विषयः। भूसंस्कारविधिः। स्नानक्रियाकथनं। श्राद्धवेला। पूरकपिण्डदानविधिः। प नरदाहविधिः। उदकदानविधिः। पिण्डदानविधिः। अस्थिसञ्चयविधिः। अशौच एकादशाहकृत्यं। वृषोत्सर्गविधिः। रुद्राध्यायकथनं। कपिलादानविधिः। शय्यादिदानविधि एकादशाहप्रयोगकीर्त्तनं। सपिण्डनविधिः। अवीराकल्पकथनं। एकोद्दिष्टविधिः। स्त्रीकर्तृक

प्रयोगकथनं । मघादिष्वमावां श्राद्धविधिः । पार्व्वणविधिः । तत्प्रयोगकथनं । चलिचे श्राद्धविधिः । आमान्नश्राद्धविधिः । तीर्थश्राद्धविधिः । नित्यश्राद्धविधिः । सपात्रकविधिकथनञ्च ।

---

**No. 2027. वृत्तिदीपिका ।** Substance, country-made paper, 12 × 4 inches. Folia, 28. Lines, 9 on a page. Extent, 1,039 ślokas. Character, Maithilí. Date, ? Place of deposit, Rághavapura, Post Vaherá, Darbhángá, Paṇḍit Viśveśvara Jhá. Appearance, old. Prose. Correct

**Vritti-dípiká.** A dissertation on the philosophy of grammar. By Krishṇa Bhaṭṭa.

**Beginning.** सजलजलदकालं सर्व्वलोकैकपालं
व्रजयुवतिरसालं चन्दनाद्यक्तभालम् ।
विगतदुरितजालं विश्वराजीवजालं
विलसिततृणमालं नौमि गोपालबालम् ।
ध्यात्वा व्याभं गुरुं नत्वा माधवेन्द्रसरस्वतीम् ।
मौनिश्रीकृष्णभट्टेन तन्यते वृत्तिदीपिका ॥

इह सकलज्ञानाभिलषितमोक्षमुख्योपायात्मतत्त्वज्ञानस्य तत्त्वमस्यादिमहावाक्यार्थबोधजन्यत्वात् शाब्दबोधे च वृत्तिग्रहणोपस्थितेर्हेतुत्वात्——इत्यादि ।

**End.** तथा च वर्णजातिस्फोटः पदजातिस्फोटः वाक्यजातिस्फोट इति तन्मते स्फोटत्रयम ॥

**Colophon.** इति श्रीमन्मौनिकुलतिलकायमानगोवर्द्धनभट्टात्मजरघुनाथभट्टसुतश्रीकृष्णभट्टविरचिता वृत्तिदीपिका समाप्ता ।

विषयः । वृत्तिस्वरूपनिरूपणं । शक्तिस्वरूपनिरूपणं । वृत्तेः शाब्दबोधहेतुत्वनिरूपणं । शक्तिलक्षणाभेदेन तस्या द्वैविध्यनिरूपणं । शक्तिग्रहनिरूपणं । तत्र गवादिपदानां गोत्वे शक्तिरितिमीमांसकमतनिरूपणं । जातौ व्यक्तौ विशिष्टे च शक्तिरितिनैयायिकानां नयनिर्णयः । कार्य्यान्विते पदानां शक्तिरिति प्राभाकरमतकीर्त्तनं । रूढ़यौगिकादौ शक्तिविवेचनं । लक्षणास्वरूपनिरूपणं । गौनीशुद्धाभेदेन तस्या द्विविधत्वकथनं । लक्षितलक्षणादिनिरूपणं । व्यञ्जनावृत्तिलक्षणं । अत्र नैयायिकमतखण्डनपूर्व्वकं तस्याः स्थापना । धात्वर्थनिरूपणं । तत्र प्राभाकरवैयाकरणादिमतकीर्त्तनं । नैयायिकमतखण्डनं । तिङर्थनिरूपणं । अपूर्व्ववादकथनं । सनाद्यर्थनिरूपणं । समासशक्तिनिरूपणं । नञर्थनिरूपणं । वीप्सादिनिरूपणं । स्त्रीप्रत्ययार्थनिरूपणं । तद्धितार्थनिरूपणं । स्फोटनिरूपणञ्च ।

---

**No. 2028.** वृत्तदर्पणम्। Substance, country-made paper, 11 × inches. Folia, 34. Lines, 7 on a page. Extent, 833 ślokas. Charact Maithilí. Date, ? Place of deposit, Rághavapura, Post Vaherá, D bhángá, Paṇḍit Viśveśvara Jhá. Appearance, fresh. Verse. Correct.

**Vṛitta-darpaṇa.** A treatise on versification, giving details of the different metres used in Sañskrit poetry. By Bhíshma Miśra.

**Beginning.** स जयति सततं पिङ्गलनामा नागरकविलरसविज्ञः।
लोकोत्तररसकवितां कलयितुमिव मङ्गीतपरजिह्वः॥
गौरीस्तननखरेखा शिरसि प्रतिबिम्बितेव चन्द्रकला।
यस्य विभाति स देवः सन्तापं नाशयत्वखिलम्॥
सन्ति यद्यप्यनेकानि वृत्तशास्त्राणि भूतले।
तथाप्यतिशयो ह्यत्र श्रमातिशयो महान्॥
यदि सद्वृत्तवृत्तानि ज्ञातुमाकाङ्क्षसि स्फुटम्।
श्रीभीष्ममिश्रचरितं पश्य तद्वृत्तदर्पणम्॥

अथ गणाः। मगणो यगणो रगणः सगणस्तगणो जगणो भगणो नगणः। इत्यादि।

**End.** दीर्घास्तदग्रे लघवश्च वर्णाः श्रेणी भवेद्वर्णकृता तदेयम्॥

**Colophon.** इति श्रीभीष्ममिश्रविरचिते वृत्तदर्पणे वर्णवृत्तनिदर्शनं नाम द्वितीयप्रकाश समाप्तश्चायं ग्रन्थः।

विषयः। (ग्रन्थेऽस्मिन् सोदाहरणच्छन्दोलक्षणकीर्त्तनं)। तत्र प्रथमप्रकाशे मादिगणनिरूपणं। गणदेवताकथनं। मित्रामित्रनिरूपणं। आर्य्यावृत्तं। गीतिः। उपगीतिः। गाथिनी। सिंहिनी। स्कन्धकं। दोहा। ललितं। रोला। चौपैया। घत्ता। वृत्तावृत्तं। नवपदं। पज्झटिका। अनिला। पादाकुलकं। षट्पदं। पद्मावती। कुण्डलिका। रोला। गगनाङ्गनं। द्विपदं। खञ्जवल्लिका। माला। सोरट्ठा। मधुभारं। आकलिका। वरवृत्तं। आभीरकं। दुर्मिलिका। रुचिरदीपकं। सिंहावलोकितं। प्लवङ्गमः। लीलावती। हरिगीतं। त्रिभङ्गी। हीरकं। जनहरणं। मनहरा। मरहट्टावृत्तञ्च। एतानि सर्व्वाणि मात्रावृत्तानि।

द्वितीये प्रकाशे,—वर्णवृत्तकथनं। तत्र श्रीः। कामः। मधु। मही। चारु। ताली। प्रियशशी। मृगेन्द्रः। मन्दरः। कमलं। कीर्णा। धारि। नगाणिका। हारी। हंसः। यमकं। शेषातिलका। विजोहा। चतुरङ्गा। मन्थानं। शङ्खधारी। सुमालतिका। मदनकं। समानिका। मसकं। करहञ्चि। शीर्षा। विद्युन्माला। मल्लिका। प्रमाणिका। तुरङ्गा। कमलं। माणवकक्रीडं। अनुष्टुप्। महालक्ष्मीः। सारङ्गिका। पायित्ता। कमलकं। बिम्बं। तोमरः। रूपामाली। संयुतिका। चम्पकमाला। सारवती। सुखमा। अमृतलता। बन्धुः। सुमखी। दोधकं। शालिनी

मदनकं। सेनिका। मालती। इन्द्रवज्रा। उपेन्द्रवज्रा। उपजाति। रथोद्धता। स्वागता। भुजङ्ग प्रयातं। लक्ष्मीधरः। तोटकं। सारङ्गं। मौक्तिकदाम। मोदकवृत्तं। मालिनी। तरलनयनी। सुन्दरी। प्रमिताक्षरा। विद्याधारः। शालावृत्तं। तारकं। स्कन्धवृत्तं। पुष्पिताग्रा। वसन्ततिलका। चक्रं। सारङ्गी। चामरः। मालिनी। भ्रमरावलिका। मनोहंसः। सरभः। निशिपालः। नाराचं। नीलवृत्तं। चञ्चला। ब्रह्म। पृथ्वी। मालाधरः। शिखरिणी। मन्दाक्रान्ता। हरिणी। मञ्जीरा। चर्चरी। क्रीडाचन्द्रः। शार्दूलविक्रीडितं। मत्तचन्द्रः। धवलं। शम्भुः। गीतिका। गण्डकी। स्रग्धरा। राजसुखकरः। राजभवः। रमणी। स्फीतावंशी। सुन्दरिका। दुर्म्मिलिका। किरीटं। चीरमुकुटं। मन्याममयोग्यं। देवशरणम्। शानूरवृत्तञ्च। प्रस्तारमूलकरणं। प्रस्तारप्रकारकीर्त्तनं। तत्र मात्राप्रस्तारः। वर्णप्रस्तारः। मात्रोद्दिष्टकथनं। वर्णोद्दिष्टकथनं। मात्रानष्टं। वर्णनष्टं। मात्रामेरुकथनं। वर्णमेरुकथनं। मात्रापताका। वर्णपताका। मात्रामर्कटी। वर्णमर्कटी। मात्राश्रेणीकथनञ्च।

---

**No. 2029.** व्रताचारः। Substance, country-made paper, 11 × 4 inches, Folia, 155. Lines, 9 on a page. Extent, 3,638 ślokas. Character, Maithilí. Date, ? Place of deposit, Rághavapura, Post Vaherá, Darbhángá, Paṇdit Viśveśvara Jhá. Appearance, new. Prose and verse. Generally correct.

**Vratáchára.** Disquisition and rules regarding the optional fasts called Vratas. By Ratnapáṇi S'armá, son of Gáṅgolí Sañjíveśvara S'armá. Several works of this author have been noticed under Nos. 2016 to 2020, 2022, 2023, and 2032.

**Beginning.** सुरादीनामन्तःकरणसरसां मण्डनकरं
परं स्थितिस्थानप्रलयवलयामन्तमनमः।
अखण्डं ब्रह्माण्डं विलसति यदन्तर्गतमहो
सदा लम्बे लम्बोदर तव पदाम्भोजयुगलम्॥
कर्त्री कान्त्या कला सा कलिकलुषहरी + + कन्या कृतार्था
कालाङ्गी कालरात्रिः कलितकलरवा कामदा कञ्जनेत्रा
कल्पद्रुः कोमलाङ्गी कमलकुलकरीकम्बलाभाकुचोग्रा
काली काली कराली कलयतु कुशलं कालिका कालिका मे॥
खण्डवलान्वयजन्मा मिथिलेशोऽभूद्भवसिंहनामा।
हरिहरविलसितचरित्रो मित्रो महसा महोदारः॥
तदीरसो दानिषु कर्णजेता यो देवसिंहोऽभवदुप्रचेताः।
धर्मावतारो धृतनीतिभारो वेदान्तसिद्धान्तरहस्यधारः॥
तत्पुत्रो नृपतिलकः श्रीमान् महेश्वरसिंह उदितकलः।

विलसति यस्य चरित्रं सम्पे वयसि यथा चरितः ॥
आज्ञां तस्य निधाय मङ्गलवतः श्रीयद्वताचारकम्
श्रीदत्तप्रभृतिप्रयासबलितग्रन्थौघभूषोदितम् ।
विद्वद्वृन्दकृपाकलापशरणः श्रीरत्नपाणिः कृती
कुर्व्वेऽहं गुरुसङ्कुचं बुधमुदे जीवेश्वरस्यात्मजः ॥
प्रामाण्यहेतोश्च मया व्यलेखि महाजनानां रचितानुपूर्व्वी ।
बहुस्थलेष्वत्र ततोऽभिमानं ग्रन्थो ममैवेति न सङ्कुचोऽयं ॥
सालसा ये च विद्वांसो धर्म्मशास्त्रावलोकने ।
पश्यन्तु ते महात्मानो व्रताचारममत्सराः ॥
उक्तस्यैवार्थस्य कथा मतभेदव्यवस्थिता ।
पौनरुक्त्यं ततो नेह दृढसंस्कारकारिका ॥

अथादौ व्रतसमयविचारः। ज्योतिर्निबन्धे—इत्यादि ।

**End.** तद्दिने तिलैरुद्वर्त्तनं तिलभक्षणञ्च कार्य्यमिति।

**Colophon.** इति गाङ्गोलीश्रीसञ्जीवेश्वरशर्म्मसूनुश्रीरत्नपाणिशर्म्मसङ्गृहीतो व्रताचारः समाप्तः ।

**विषयः ।** व्रतकालनिरूपणं । तत्र समयशुद्धिविवेचनं । व्रतसामान्यधर्म्मकथनं । व्रताधिकारिकथनं । व्रतिनो नियमादिकथनं । अत्र विविधमतकथनं । सङ्कल्पवाक्यविवेचनं । व्रतभङ्गव्यवस्थाकथनं । प्रतिनिधिविधिः । नक्तव्रतनिरूपणं । हविष्यनिरूपणं । नक्तव्रतेतिकर्त्तव्यता । नित्योपवासादिनिरूपणं । देवपूजाविधिः । मासादिविवेचनं । तिथिद्वैधादिविवेचनं । पूर्व्वाक्लादिविवेचनं । प्रतिपदादिषु सर्व्वासु तिथिषु व्रतकथनं । तत्र विशेषेण महालक्ष्मीव्रतकथनं । महाष्टमीव्रतं । भीष्माष्टमीव्रतं । भीष्मतर्पणविवेचनं । अशोकाष्टमीव्रतं । जन्माष्टमीव्रतं । दुर्व्वाष्टमीव्रतकथनञ्च । श्रीरामनवमीव्रतं । एकादशीव्रतनिरूपणं । तत्र विविधमतकथनं । व्यवस्थाकथनञ्च । पारणविवेचनं । श्रवणद्वादश्यादिनिरूपणं । हरिवासरव्रतनिरूपणं । महावारुण्यादिनिरूपणं । गङ्गास्नानसमयादिनिरूपणं । महानिशानिरूपणं । रामस्नानादिनिरूपणं । गजच्छायाविवेचनं । पार्व्वणादिविधिः । अनन्तव्रतविधिः । रटन्तीचतुर्द्दशीविधिः । शिवरात्रिविधिः । कोजागरादिपूर्णिमाविधिः । करतोयास्नानविधिः । चयाहतिथ्यादिविवेचनं । एकोद्दिष्टादिश्राद्धलक्षणं । स्नानश्राद्धादिविधिः । अशौचेऽप्येकभक्तादिव्रतविधानं । व्रताशौचकर्त्तव्यता । मलमासविवेचनादिकं । श्राद्धे पञ्चाङ्गमनविधिकथनं । सामान्यतः श्राद्धकालादिनिरूपणं । व्रीहिश्राद्धादिविधिः । नवान्नविधिः । अत्र विविधमतकथनं । प्रत्येकं चैत्रादिद्वादशमासकृत्यनिरूपणं विधानञ्च । अत्र दशहराविधिः । हरिशयनविधिः । चातुर्म्मास्यविधिः । नागपञ्चमीविधिः । उपाकर्म्मादिनिधिकीर्त्तनञ्च । विविधदानविधिकथनं । देवपूजादिविधिकीर्त्तनञ्च । अत्र सर्व्वत्र प्रयोगकथनमिति ज्ञेयम् ।

---

**No. 2030.** तत्त्वामृतसारोद्धारे व्यवहारकोषः। Substance, country-made paper, 12 × 3½ inches. Folia, 79. Lines, 11 on a page. Extent, 2,698 ślokas. Character, Maithilí. Date, ? Place of deposit, Rághavapura, Post Vaherá, Darbhángá, Paṇḍit Viśveśvara Jhá. Appearance, new. Prose and verse. Generally correct.

**Tattvámṛita-sároddhára.** An elaborate Smṛiti digest. The text contains only that portion of the work which is devoted to Judicature and Civil and Criminal law. It is called *Vyavahárakosha*. By Vardhamána Mis'ra.

**Beginning.** सारोद्धारे यथोद्दिष्टमाचारश्राद्धशुद्धयः।
उदाहृता अथेदानीं व्यवहारोऽभिधीयते॥
तत्र मनुः। ब्राह्मं प्राप्तेन संस्कारं क्षत्रियेण यथाविधि।
सर्व्वस्यास्य यथान्यायं कर्त्तव्यं परिरक्षणं।
ब्राह्मं ब्रह्मणेन कृतमभिषेकलक्षणं क्षत्रियेणेति भूपतिमात्रोपलक्षणं। इत्यादि।

**End.** अस्माभिर्दण्डविवेके स्तेयप्रकरणे प्रपञ्चितमतो न वितन्यते॥ इति व्यवहाराङ्गलौ विवादपदकोषः।

**Colophon.** इति श्रीवर्द्धमानकृतौ तत्त्वामृतसारोद्धारे चतुर्थो व्यवहारकोषः॥
इत्थं धर्म्मामृतादिम्यश्चतुर्भ्यस्तत्त्वमुद्धृतम्।
धात्रा चतुर्भ्यो वेदेभ्योऽमाद्यवेदो यथोद्धृतः॥
+ + + + + कृतीनामेव भागैश्चतुर्भि-
स्तदपि पृथगमीभ्यो भासतेऽसौ निबन्धः।
स्फुरति हि कुसुमानां केशवे योजितानां
सुघटितसमुदायद्योतितान्येव लक्ष्मीः॥
दैनन्दिनमाचारं श्राद्धं शुद्धिं विवादपदं।
प्रायः प्रत्यक्षमेतत् प्राज्ञो जिज्ञासते सर्व्वः॥
तस्माच्चतुर्भिरेभिः कुसुमैरिव गुम्फितो गुणोपहितैः।
मालेवैष निबन्धो रामपतेः कण्ठभूषणं भवतु॥
सज्जनैः शोध्यतां सोऽयमल्पज्ञैरुपजीव्यताम्।
दुर्ज्जनैर्दुष्यतां कामं मज्जनैरनुगृह्यताम्॥
मासूयति गुणगन्धात् नोद्विजते दोषसम्बन्धात्।
अविदितगुणदोषोऽपि परकृतिरित्येव दुर्ज्जनो ज्वलति॥
इति वर्द्धमानकृतौ तत्त्वामृतसारोद्धारः समाप्तः।

विषयः। राज्ञा प्रजाभ्यः करग्रहणविधिः। प्रजारक्षणविधिः। व्यवहारदर्शनविधिः। ब्राह्मणाय भूमिदानविधिः। प्राड्विवाकनिरूपणं। सभ्योपदेशकथनं। दण्डविधिकीर्त्तनं। अदण्ड्यदण्डने दोषनिरूपणं। दण्डभेदकथनं। क्वचित् क्षमाविधिनिरूपणं। दण्डव्यवस्थाकथनं। महापातकदण्डकथनं। दण्डापकर्षकथनं। दण्डसाम्यविधिः। दण्डपरिनिष्ठाकथनं। दण्डकारनियमकथनं। दण्डसमुच्चयनिर्णयः। एकत्र दण्डे दण्डान्तरसङ्कलनं। चतुष्पाद्व्यवहारनिर्णयः। अप्राप्तव्यवहारनिरूपणं। भाषालेखनविधिकथनं। पाण्डुलेखादिविधानं। उत्तरविधिनिरूपणं। उत्तराभासादिनिरूपणं। साक्षिनिरूपणं। क्रियानिरूपणं। शपथविधिः। द्वादशविधसाक्षिकीर्त्तनं। त्रिविधलेख्यनिरूपणं। पुनर्लौकिकलेख्यस्य सप्तविधत्वकथनं। भागपत्रादीनां लक्षणकथनं। त्रिविधानुमानप्रमाणनिरूपणं। आगमप्रमाणनिरूपणं। भोगनिरूपणं। प्रत्ययनिरूपणं। दण्डपारुष्यकारिनिरूपणं। याम्यक्रियानिरूपणं। उत्तरभेदेन क्रियाव्यवस्थाकथनं। चतुर्विधनिर्णयनिरूपणं। व्यवहारलक्षणसन्देहकथनं। निर्णयेषु बलाबलनिरूपणं। निर्णीतसत्यनिरूपणं। तत्र मिथ्याभियोगादौ दण्डकथनञ्च। पुनर्न्यायविधिः। अष्टादशव्यवहारपदनिरूपणं। तत्र ऋणादानविधिः। भोगलाभनिरूपणं। वृद्ध्यादिनिरूपणं। ऋणशोधनप्रकारकथनं। निक्षेपविधिः। अस्वामिविक्रयविधिः। सम्भूयसमुत्थानविधिः। दत्तस्यानपाकर्म्मनिरूपणं। तत्र देयनिरूपणं। तस्य सप्तविधत्वकथनादिकं। अष्टविधदत्तस्वरूपकीर्त्तनं। अदत्तनिर्णयः। उत्कोचग्रहणादिदण्डकथनं। भृतिविधिकथनं। तत्र अधिकर्म्मादिनिरूपणं। दास्यानधिकारकथनं। दास्यमोचनविधिः। तत्प्रकारादिकथनञ्च। दासीनिरूपणादिकं। वेतनस्यानपाकर्म्मनिरूपणं। पण्यस्त्रीविधिः। स्वामिपालविवादनिरूपणं। सम्विद्व्यतिक्रमनिरूपणं। क्रयविक्रयानुशयः। सीमाविवादः। वाक्पारुष्यविधिः। दण्डपारुष्यविधिः। स्तेयविधिकथनं। तत्र द्विपदापहारदण्डकथनं। चतुष्पादापहारादौ दण्डः। धान्याद्यपहारे दण्डकथनञ्च। सामान्यापहारदण्डः। साहसदण्डकथनं। तत्र प्रेरकादिदण्डकथनञ्च। स्त्रीसङ्ग्रहणदण्डकथनं। तत्र गोपमादिकृते विशेषकथनं। कन्यादूषणदण्डकथनं। अस्वाभाविकदण्डकथनं। स्त्रीपुंधर्म्मनिरूपणं। दायभागनिरूपणं। तत्र संसृष्टिविभागः। अवसन्नविभागः। विभक्तागतविभागः। विभक्तजविभागः। अपुत्रादिधनविभागः। वानप्रस्थादीनां धनाधिकारिनिरूपणं। स्त्रीधनाधिकारिणः। विभागनिर्णयः। विभक्तसत्यनिरूपणञ्च। द्यूतसमाह्वयविधिः। तत्र दण्डादिनिरूपणञ्च।

---

**No. 2031.** धर्म्मकोषः। Substance, country-made pâper, 9 × 3 inches. Folia, 50. Lines, 9 on a page. Extent, 1,212 ślokas. Character, Maithilí. Date, ? Place of deposit, Vehaṭ, Post Mádhepura, Darbháṅgá, Paṇḍit Phaṇidhara Miśra. Appearance, old. Prose and verse. Correct.

**Dharma-kosha.** A digest of the laws relating to civil actions debts, interest, gifts, rules regarding servants, artizans, dancers &c., sal

and barter, wages, boundaries, and inheritance. By Trilochana Miśra, Mahámahopádhyáya.

**Beginning.** मीमांसाद्युम्नजीवी तु मिश्रः श्रीमान् त्रिलोचनः ।
विवादपदव्याख्यानां व्यवस्थामकरोत् स्फुटाम् ॥
अथर्णादानं । तत्र नारदः ।
ऋणं देयमदेयं वा येन यत्र यथा च यत् ।
दानग्रहणधर्मीश्च ऋणादानमिति स्मृतम् । इत्यादि ।

**End.** अतोऽन्यथा निर्वीजेषु इतराभियमात् । अन्यथा यत्र न तथा प्र+भिजायते तद्विभज्य ग्राह्यमित्यर्थः ।

**Colophon.** इति महामहोपाध्यायमिश्रत्रिलोचनव्यवस्थापितधर्मकोषपुस्तकं समाप्तम् ।

विषयः । ऋणादानादिविधिः । निक्षेपविधिः । तत्र सन्दिग्धलक्षणादिकथनं । इद्धिनियमादिकथनं । प्रत्देयादेयनिरूपणं । तत्र पितृऋणदाने समयादिकथनं । स्त्रीणां देयादेयनिरूपणं । आधिविधिकथनं । उद्ग्रहणविधिकथनं । निक्षेपप्रकारकथनं । अस्वामिविक्रयविधिः । सम्भूयसमुत्थानविधिकथनं । तत्र शिल्पिनर्तकानां विशेषकथनं । भृत्यविधिकथनं । वेतनस्यानपाक्रियानिर्णयः । स्वामिपालविधिः । संविद्व्यतिक्रमविधिः । विक्रीयासम्प्रदानविधिः । क्रीतानुशयविधिः । सीमाविवादनिरूपणं । मस्यरचादिविधिः । दण्डपारुष्यविधिः । दायभागविधिकथनं । तत्र स्त्रीधनादिविभागकथनं । वर्णसमवायविभागकथनं । अपुत्रधनाधिकारिनिरूपणं । संसृष्टधनविभागकथनञ्च ।

---

**No. 2032.** महादानवाक्यावली । Substance, country-made paper, 11 × 5 inches. Folia, 108. Lines, 7 on a page. Extent, 2,246 ślokas. Character, Maithilí. Date, ? Place of deposit, Vehaṭ, Post Mádhepura, Darbháṅgá, Paṇḍit Phaṇidhara Miśra. Appearance, fresh. Prose and verse. Correct.

**Mahádána-vákyávalí.** A summary of the rules regarding various kinds of religious and quasi-religious gifts. By Ratnapáṇi S'armá, son of Gáṅgolí Sañjíves'vara S'armá.

**Beginning.** श्रीलक्ष्मीन्द्रपत्पयोजयुगलं विघ्नौघविध्वंसनं
ध्यात्वा मानसमानसे भवभयच्छित्त्यमसम्मानकृत् ।
प्रोद्यन्महितदानपद्धतिरियं सङ्गृह्य लेलिख्यते
श्रीवेश्मात्मजरत्नपाणिकृतिना विद्वद्वराह्लादिका ॥
इतिहाससमुच्चये,—

तपः कृते प्रशंसन्ति त्रेतायां ज्ञानमेव च ।
द्वापरे यज्ञमेवाहुर्दानमेकं कलौ युगे ॥ इत्यादि ।

**End.** ऐहलौकिकमत्यायुरारोग्यभनदुस्तरसुखवञ्चलोकप्राप्तिकाम इदमाख्येतमथर्न वि-ष्णुदैवतमित्यादि दक्षिणाश्मर्माणम् ।

**Colophon.** इति गाङ्गोलीश्रीसलीवेश्वरहनुश्रीरत्नपाणिशर्म्मसङ्कलीता महादानवाक्या-वली परिपूर्णा ।

**विषयः ।** दानप्रशंसा । दानस्वरूपकथनं । सत्कालनिरूपणं । धर्म्मलक्षणादिकीर्त्तनं । पुण्य-देशकथनं । द्रव्यदैवतनिरूपणं । अतः सर्व्वत्र दानेषु प्रयोगकथनं । तत्र नानापुराणोक्तसर्णदान-विधिकथनं । हिरण्यकाव्यदानविधिः । पुराणायुक्तरजतदानविधिः । अलङ्करणदानविधिः । हैमरौप्यपात्रादिदानविधिः । तात्रभाजनादिदानविधिः । घृततैलमधुतैजसपात्रदानविधिः । जल-पात्रादिदानविधिः । पुराणायुक्तजलदानविधिः । मणिक्षीरकादिरत्नदानविधिः । विविधरत्न-दानविधिः । नगरग्रामादिदानविधिः । पुराणायुक्तगोदानविधिः । तत्र वर्णविशेषेण फलविशेष-कथनञ्च । महिषीदानविधिः । अश्वादिदानविधिः । कागहरिणादिदानविधिः । गुडधेनुतिल-धेन्वादिदानविधिः । लवणादिदानविधिः । कृष्णाजिनादिदानविधिः । पूर्णहेमपद्मघटदानवि-धिः । नानापुराणोक्तभूमिदानविधिः । उद्यानादिदानविधिः । विविधशस्यदानविधिः । विविधा-न्नदानविधिः । शय्यादानविधिः । दधिगुड-शर्कारादिदानविधिः । पानककर्पूरादिदानविधिः । चन्दनागरुमामिकुङ्कुमादिदानविधिः । धूपदीपादिदानविधिः । सुगन्धिद्रव्यदानविधिः । विवि-धशाकफलादिदानविधिः । शय्यासनपीठादिदानविधिः । पादुकाच्छत्रादिदानविधिः । दासा-दिदानविधिः । शालग्रामशिलादिदानविधिः । सीसलौहादिधातुदानविधिः । पुस्तकदानवि-धिः । विविधवस्त्रदानविधिः । द्वादशमासकर्त्तव्यदानविधिकथनं । सर्व्वत्र संक्रान्तिषु दानविधिः । कन्यकादिदानविधिकीर्त्तनञ्च ।

---

**No. 2033. तिथिनिर्णयः ।** Substance, country-made yellow paper, 11 × 3 inches. Folia, 24. Lines, 6 on a page. Extent, 278 ślokas. Character, Maithilí. Date, ? Place of deposit, Vehaṭ, Post Mádhepura, Darbháṅgá, Paṇḍit Phaṇidhara Jhá. Appearance, new. Prose and verse. Generally correct.

**Tithi-nirṇaya.** On lunar days and the religious duties appertaining thereto—a brief calendar of feasts and fasts. By Sudarsana.

**Beginning.** नत्वा सीतापतिं रामं सच्चिदानन्दरूपकं ।
बालानां बोधसिद्ध्यर्थं क्रियते तिथिनिर्णयः ॥

अथ विशेषतिथीनां निर्णयो लिख्यते। चैत्रशुक्लप्रतिपदि वर्षारम्भः। सोदयव्यापिनी ग्राह्या। तत्र ब्रह्मपुराणवचनं। चैत्रे मासि जगद्ब्रह्मा ससर्ज्ज प्रथमेऽहनि। इत्यादि।

**End.** कर्कः संक्रान्तिः प्रातःकाले अर्द्धरात्रे वा स्यात् तदा पुण्यकालः पूर्व्वदिने भवति इति संक्रान्तिनिर्णयः।

**Colophon.** इति सुदर्शनकृतौ तिथिनिर्णयः समाप्तः।

विषयः। वत्सरारम्भतिथिनिरूपणं। अत्र तैलाभ्यङ्गाकरणे दोषकीर्त्तनं। श्रीरामनवमीनिरूपणं। वारुणीनिरूपणं। अक्षयतृतीयानिरूपणं। नृसिंहचतुर्द्दशीकथनं। दशहराकथनं। हरिशयनकथनं। नागपञ्चमीकथनं। उपाकर्म्मकथनं। जन्माष्टमीनिर्णयः। हरितालिकानिरूपणं। अनन्तचतुर्द्दशीकथनं। आश्विनकृष्णपक्षे षोडशश्राद्धविधिकथनं। नवरात्रविधिः। विजयदशमीनिर्णयः। दीपान्वितकथनं। भ्रातृद्वितीयाकथनं। अर्द्धोदययोगनिरूपणं। वरदाचतुर्थीकथनं। श्रीपञ्चमीकथनं। माघसप्तमीविधिः। भीष्माष्टमी। भीमद्वादशी। शिवरात्रिः। होलिकाविधिः। इति विशेषतिथिनिरूपणानन्तरं सामान्यतः प्रतिपदादिपञ्चदशतिथिनिरूपणं। संक्रान्तिपुण्यकालविवेचनञ्च। इति।

---

**No. 2034 हयशीर्षपञ्चरात्रं।** Substance, country-made yellow paper, 17 × 4 inches. Folia, 121. Lines, 6 on a page. Extent, 3,514 ślokas. Character, Bengali. Date, ? Place of deposit, Subhaṅkarapura, Post Vaherá, Darbháṅgá, Paṇḍit, S'rínátha Jhá. Another copy at Calcutta, Government of India. Appearance, new. Prose. Generally correct.

**Hayaśírsha-pancharátra.** A Vaishṇavite work on building temples and on carving and consecration of images. It belongs to the class called *Pancharátra,* and bears close resemblance to the Tantras. Like the original Tantras, this class of works does not acknowledge the names of their authors, but represent themselves to be reports of dialogues between gods and renowned personages. In the Hayaśírsha the sage Márkaṇḍa asks questions, and his brother sage Bhṛigu answers them. The work opens with the query, why did Vishṇu appear in the form of Hayas'írsha or equine-headed? The first 18 chapters are numbered, and then follow a great many others without any numbering. Contents: Origin of Brahmá from the navel of Vishṇu. Origin of the Vedas and their study by Brahmá. The perspiration resulting from the study produced the demons Madhu and Kaiṭabha, who robbed the Vedas. Hayas'írsha born to rescue the Vedas. Twenty-five original Tantras of former ages, and the *Hayaśírsha-pancharátra* was first thereof. Other Pancharátras, such as

*Trailokyamohana, Vaibhava, Paushkara, Nárada, Práhláda, Gárgeya, Gálava, S'ríprasna, S'ásya* &c. Characteristics of teachers. Ditto of spiritual guides. Heretic doctrines of Jaimini, Sugata, Chárváka, Nagna, Kapila, Akshapáda, and other sects. Placing of images in temples. Examination of earth for building. Different kinds of earth. Measures of length &c. Setting up of Gnomons for ascertaining of quarters. Division of areas. Rules for sacrifices before commencing a building. Removing of bones from the ground selected for building. Bricks. Stones. The Yajna of Pátála. Characters of temples for particular gods. Selection of stones for sculpture. Particular mountains yielding statuary stones. Auspicious conjunctions for beginning the carving of images. Rites to be performed on such occasions. Measures of images. Pacification of the regents of the quarters. Characteristics of images of Lakshmí, Garuḍa, Kes'ava, the ten incarnations, groups of Kes'ava and others, Vis'varúpa, the nine planets, the Mátris, Indra and other Lokapálas, the eleven Rudras, the Androgynous Ardhanárí, Gaurí, lingams. Rules regarding the consecration of images of various gods and goddesses. Ditto of books, houses, tanks, wells, public halls &c. Repairs of images. Rejoicings on such occasions. Marriage of S'rí and Vishṇu, and Gaurí and S'iva.

**Beginning.** मार्कण्डेय उवाच । कथं हयशिरा विष्णुः प्रादुर्भूतः पुरा विभुः ।
किं निमित्तञ्च देवेशो दधार रुचिरं वपुः ॥
हयशीर्षं जगत्स्वामी पुरा नारायणः प्रभुः ।
श्रुतमासीच्च भवता यदुक्तं परमेष्ठिना ॥
आद्यं यत् पञ्चरात्राणां तन्ममाचक्ष्व पूर्व्वतः ।
भृगुरुवाच । शृणु वत्स प्रवक्ष्यामि पञ्चरात्रं पुरातनम् ॥ इत्यादि ।

**End.** कुम्भकारमृदा कृत्वा शर्व्वाणीं पूर्व्ववद्यजेत् ।
सूर्पेण प्रमदास्तद्वद्बलिं दद्युर्यथाविधि ॥
सौमानकं यावकञ्च दद्यादिन्द्राणीतुष्टये ॥

**Colophon.** इति (हयशीर्षपञ्चरात्रे) गौरीविवाहपटलं ॥ समाप्तोऽयं ग्रन्थः ।

विषयः । १प्रथमे पटले,—भृगुणा सह मार्कण्डेयस्य संवादकथनेन नारायणस्य नाभिपद्मात् ब्रह्मण उत्पत्तिकथनं । वेदानामाविर्भावकथनं । वेदाभ्यासरतस्य ब्रह्मणः स्वेदबिन्दुतः मधुकैटभयोरुत्पत्तिकथनं । ताभ्यां वेदहरणकथनं । हयशीर्षस्याविर्भावकथनञ्च ।

२—४पटले,—पूर्व्वपूर्व्वकल्पोक्तपञ्चविंशतितन्त्राणां नामकथनं । तत्र हयशीर्षपञ्चरात्रस्य प्राधान्यकथनं । एवं क्रमेण त्रैलोक्यमोहन-वैभव-पौष्कर-नारद-प्राह्लाद-गार्ग्य-गालव-श्रीप्रश्न-शाण्डिल्यादिपञ्चरात्राणामुद्देशकीर्त्तनं । आचार्य्यलक्षणं । गुरुलक्षणादिकथनञ्च ।

५—८पटले'—जैमिनि-सुगत-चार्व्वाक-नग्न-कपिलाक्षपादानां वेदवादिनां मतानुसारेण वर्णनामानां नराधमत्वादिकथनं। देवतास्थापनदिङ्नियमादिकथनं। भूमिपरीक्षाविधिकथनं। भूमेश्चातुर्व्विध्यनिरूपणं। तत्र सुपद्मा, भद्रिका पूर्णा, धूम्रा चेति। ब्राह्मणादिवर्णभेदेन मृत्तिका-वर्णानां शुभाशुभनिरूपणं। मानपरिभाषाकीर्त्तनं। शङ्कुलक्षणादिकथनं। वास्तुनिरूपणप्रसङ्गेन क्षेत्रव्यवहारकथनं।

९—१४पटले,—भूतादिबलिदानविधिः। शल्योद्धारकथनं। इष्टकादिलक्षणं। तन्न्यासवि-धिकथनञ्च। शिलाधिवासविधिः। पातालयागविधिकथनं। प्रासादलक्षणं। तन्न्यासविधिकथन-ञ्च। पञ्चायतनादिप्रासादविशेषे वासुदेववामनादिमूर्त्तिस्थापनादिकथनं।

१५—१८पटले,—प्रतिमाघटनार्थं शिलादिलक्षणकथनं। प्रस्तरग्रहणार्थं पर्व्वतविशेषनि-रूपणं। प्रतिमानिर्म्माणे तिथिनक्षत्रादिनिरूपणं। यागविधानञ्च। घटनाविधिकथनं। तत्र परिमाणादिकथनञ्च। दिक्साम्निकथनं। प्रतिमालक्षणकथनञ्च।

(अतः परं पटलसंख्यानास्तीति ज्ञेयं। पिण्डिकालक्षणकथनं। लक्ष्मीलक्षणं। गरुड़लक्षणं। केशवादिप्रतिमालक्षणं। दशावतारप्रतिमालक्षणं। वासुदेव-सङ्कर्षण-प्रद्युम्नादिनवव्यूहप्रतिमाल-क्षणं। विश्वरूपादिप्रतिमालक्षणं। नवग्रहप्रतिमालक्षणं। मातृणां प्रतिमालक्षणं। इन्द्रादिलो-कपालप्रतिमालक्षणं। एकादशरुद्रप्रतिमालक्षणं। अर्द्धनारीश्वरलक्षणञ्च।

गौरीप्रतिमालक्षणं। शिवलिङ्गलक्षणं। सामान्यतः पिण्डिकालक्षणं। प्रतिष्ठाकालनिरूपणं। दिक्पालपूजाविधिः। कलसाधिवासविधिः। भगवत्प्रतिष्ठायां स्नपनादिविधिः। अधिवासन-विधिः। रत्नन्यासविधिः। प्रतिष्ठाविधिकीर्त्तनञ्च।

अवभृतस्नानविधिः। बलिदानविधिः। द्वारप्रतिष्ठाविधिः। स्तूपप्रतिष्ठाविधिः। ध्वजारो-पणविधिः। लक्ष्मीप्रतिष्ठाविधिः। गरुड़स्थापनविधिः। चक्रस्थापनविधिः। शेषप्रतिष्ठाविधिः। चतुर्मुखस्थापनविधिः। नृसिंहप्रतिष्ठाविधिः। वराहप्रतिष्ठाविधिः। पुरुषोत्तमप्रतिष्ठाविधिः। वामनप्रतिष्ठाविधिकथनञ्च।

वैकुण्ठप्रतिष्ठाविधिः। हयग्रीवप्रतिष्ठाविधिः। अनिरुद्धप्रतिष्ठाविधिः। जलशायिप्रतिष्ठा-विधिः। मत्स्यादिदशावतारस्थापनविधिः। अनन्तप्रतिष्ठाविधिः। विश्वरूपप्रतिष्ठाविधिः। शि-वलिङ्गप्रतिष्ठाविधिः। रुद्रमूर्त्तिप्रतिष्ठाविधिः। अर्द्धनारीश्वरप्रतिष्ठाविधिः। हरिहरप्रतिष्ठा-विधिः मातृणां प्रतिष्ठाविधिः। भैरवप्रतिष्ठाविधिकथनञ्च।

सूर्य्यप्रतिष्ठाविधिः गणेशप्रतिष्ठाविधिः। गौरीप्रतिष्ठाविधिः। नवग्रहप्रतिष्ठाविधिः। चलविष्णुमूर्त्तिप्रतिष्ठाविधिः। चलशिवलिङ्गप्रतिष्ठाविधिः। चित्रार्चादिप्रतिष्ठाविधिः। पुस्तक-प्रतिष्ठादिविधिः। कूप-वापी-तड़ागादिप्रतिष्ठाविधिः। सभाप्रतिष्ठाविधिः। सामान्यतः सर्व्वदेवा-दिप्रतिष्ठाकथनं। जीर्णोद्धारविधिकथनं। महोत्सवविधिकथनं। यज्ञावभृतविधिकथनं। श्रीवि-वाहविधिकथनं। गौरीविवाहविधिकीर्त्तनञ्च।

---

**No. 2035.** कुवलयाश्वीयं नाम नाटकम्। Substance, country-made paper, 12 × 4 inches. Folia, 85. Lines, 7 on a page. Extent, 2,219 ślokas. Character, Maithilí. Date, ? Place of deposit, Sáradápura, Ujána, Post Mádhepura, Darbhángá, Paṇḍit Harshanátha Jhá. Appearance, fresh. Prose and verse. Correct.

**Kuvalayáśvíya.** A drama. By Krishṇadatta. It is founded on a story of a Vedic student named Kuvalayáśva falling in love with a maiden named Madálasá. The maiden is carried away to the nether regions, whence she is rescued by a king of Káśí and restored to her lover.

**Beginning.** भालप्रस्खलनाचिकेतवसतीविस्रेषवैश्वानर-
ज्वालावर्त्तितसीरसैन्धवपयःफेनैकलेखेव या।
सा गौरी मिलने पुनः पुररिपोः प्रेमप्रदीपे रसं
दातुं युक्तिवपाहितेव कलिता चान्द्री कला पातु वः॥
अपि च। श्रुत्वा दक्षाद्लीकं प्रियकलुषमतिव्यस्तया सद्य एव
त्यक्ते सत्या स्वदेहे प्रभुरपि न वधूं स्वीचकारापरां यः।
तामेव प्राप्य भूयो नगजननमितामर्द्धनारीश्वरोऽभूत्
स प्रेमाद्वैतवादी कलयतु भवतामृद्धिमर्द्धेन्दुमौलिः॥

नान्द्यन्ते सूत्रधारः। अलमतिविस्तरेण। पुरोऽवलोक्य। कथमयमुदित एव मधुमयरचित-समुदितमदनमालवकामिनीकपोलफलककोमलकमनीयमण्डलः कनककुण्डलमाखण्डलदिगङ्गनाया अखण्डलावण्यरत्नाकरः अखिलजगदानन्दकन्दलश्चन्द्रस्तमेनमभ्युदीयमानमहमभ्यर्थये। स-प्रश्रयमञ्जलिं बद्धा भगवन्।

कलयसि सकलाः कलाः सुधानां निधिरसि मौलिमलङ्करोषि शम्भोः।
शमयसि जगतामतीव तापं तव तुलनासु कुतस्त + हिमांशो॥
— — — — — — — — सूत्र। — — — — —
छष्णदत्त इति मैथिलः कविर्बालभावसुलभात् कुतूहलात्।
नाटकं यदभिनव्यमातनोत् कोऽत्र सम्प्रति गुणागुणग्रहः॥
सदनुग्रहादेव सर्व्वं साधुसम्पत्स्यते। — — — — पारि।
किन्नाम कीदृशं तत्?। सूत्र। कुवलयाश्वीयं नाम नाटकं॥ इत्यादि।

**End.** तथापीदमस्तु। काले काले सलिलममृततरसमर्थौं हृष्टिमिष्टां विधत्तां
पृथ्वी सम्पन्नशस्या भवतु, विजयिनः पान्तु लोकं नरेन्द्राः।
सर्व्वः सर्व्वत्र भन्दलखिलगुणगुरौ विन्दतु प्रेमभक्तिं

तद्विश्लेषे दयार्द्रं प्रसरतु परितः सत्कवेः सूक्तिरत्नम् ॥

भरद्वाजः । एवमस्तु । इति निष्क्रान्ताः सर्व्वे ।

Colophon. कुवलयाश्वसाम्राज्याभिषेकमहोदयो नाम सप्तमोऽङ्कः ॥ समाप्तञ्चेदं कुवलयाश्वीयं नाम नाटकम् ।

विषयः । प्रथमाङ्के, काशीराजप्रतीहारयोरभिनयेन प्रजानां सौख्यवर्णनं । अत्रान्तरे भरद्वाजस्य महर्षेरादेशज्ञापनार्थं सोमशर्म्मणः प्रावेशिकी ध्रुवा । ततस्तेनैव शिष्येण कुवलयनामानमश्वमनुकर्षतानुगम्यमानस्यापरेण च दमघ्नस्तावलम्बस्य महर्षेर्गालवस्य प्रवेशेन पातालाधिवासिनः पातालकेतोस्तपोवनोपरोधसूचनं । अथ मुनिना कुवलयाश्वेति कृतनामधेयः काशीराजकुमार ऋतध्वजः सादरमश्वमिममारुह्य तमनुससार ।

द्वितीयाङ्के,—समिदाहरणाय नियुक्तस्य पुण्यशीलस्य प्राभातिकतपोवनरमणीयतां वर्णयतो वात्स्यायनेन सह संलापेन विश्वावसोर्गन्धर्व्वराजस्यापहृत्य कुमारीनाम्ना मदालसा समानीता पातालपुरं पातालकेतुनेति सूचनं । कङ्कालककरालकयोः प्रवेशेन कुमारप्रभाववर्णनं, मध्याह्नवर्णनञ्च । अथ कङ्कालकेन वन्यजनकृषिकौशलप्रदर्शनव्याजेन तपोवनप्रान्तदेशं समानीतोऽसौ कुमारः सान्ध्यसौन्दर्य्यदर्शनसुखमनुभवन्नेव सूकररूपेण समुपस्थितं पातालकेतुमुद्दिश्य निष्क्रान्त इति ।

तृतीयाङ्के,—मन्दारिका-चन्दारिकयोः संवादेन मदालसायाः कातर्य्यादिवर्णनं । मदालसायाः प्रवृत्तिमाकलयितुं पातालमुद्दिश्य प्रचलितायाः कुण्डलायाः कुवलयाश्वेन सह संलापकथनं । कुमारसौन्दर्य्यामृतं निपीय पूर्व्वमनुरक्तायाः मदालसाया वैचित्र्यवर्णनं । अथ गन्धर्व्वकुलगुरोस्तुम्बुरोः प्रवेशेन तयोः परिणयवर्णनञ्च ।

चतुर्थाङ्के,—पुण्यशीलस्य प्रावेशिकी ध्रुवा । अत्रान्तरे सपरिजनस्य काशीराजस्य कुमारकृतपातालकेतुविजयादिवृत्तान्तश्रवणमहोत्सवः । कुमारस्य यौवराज्याभिषेकवर्णनञ्च ।

पञ्चमाङ्के,—देवब्राह्मणकार्पटिकयोरभिनयेन प्रियासहायस्य युवराजस्य वन्दनार्थं विश्वेश्वरस्य मन्दिरप्रवेशसूचनं । अथ मित्रतामुपागतयोर्नागकुमारयोः सपर्य्यां विधाय नितरां परितुष्टस्य तस्य प्रियार्थे चित्रनैपुण्यप्रदर्शनार्थं चित्रशालिकाप्रवेशः । अत्रान्तरे मदालसाया उत्स्वप्नायितं । समनन्तरञ्च कञ्चुकिप्रवेशेन मुनिगणरक्षणविधये विधातव्यं क्षोणीपर्य्यटनं कुमारेणेति सूचना ।

षष्ठाङ्के,—पातालकेतुसहोदरस्य सहचरसहायस्य धूमकेतोर्मुनिवेशेन प्रवेशः । कालिन्दीपरिसरं परिभ्रमता युवराजेन सह कपटतापसस्य संवादः । अथ तापसच्छद्मना पविष्टस्य धूमकेतोः प्रमुखात् युवराजप्राणत्यागवार्त्तामुपलभ्य जीवनत्यागोद्यतायाः मदालसायाः भरद्वाजवाक्येन चन्द्रबिम्बे प्रवेशकथनं ।

सप्तमाङ्के,—नागकुमारयोरभिनयेन प्रियाविरहविधुरस्य कुवलयाश्वस्य परिदेवनादिकीर्त्तनं। बटुवेशधारिभ्यां ताभ्यां सह तस्य नागलोकगमनसूचना। अथ विप्रमायितया तस्मै नागराजस्य मायामदालसाप्रदर्शनं। नागराजप्रभावात् तस्य प्रकृतमदालसासम्मेलनं। अथ कामोन्मुहिष चलितस्य कुवलयाश्वस्य प्रियायै विविधजनपदप्रदर्शनं। तस्य राज्याभिषेकमहोत्सववर्णनञ्च।

---

**No. 2036. व्यवहाररत्नाकरः।** Substance, country-made paper, 14×5 inches. Folia, 107. Lines, 8 on a page. Extent, 2,756 ślokas. Character, Maithilí. Date, ? Place of deposit, Naváni, Post Mádhepura, Darbháṅgá, Paṇḍit Vañsamaṇi Jhá. Appearance, fresh. Prose and verse. Correct.

**Vyavahára-ratnákara.** A digest of the laws and rules regarding Judicature. By Chaṇḍes'vara Ṭhakkura, son of Viśveśvara Ṭhakkura. The author calls himself a minister (*Mantri*) and describes his father as a minister of war, but does not name the king whom they served.

**Beginning.** श्रीकृष्णाङ्घ्रिः सर्व्वं साधयतु।

शास्त्रान्निर्णयते विवादविषयं न्यायानृतीयेक्षणाद्-
यो वादार्थपथप्रवर्त्तनकृती धर्म्मेन्दुमुत्संयम्।
स श्रीमान् व्यवहारसङ्कुलममुं चण्डेश्वरो मन्त्रिणा-
मर्च्यः कीर्त्तिसुरापगाम्बुदपरं प्रस्तौति रत्नाकरम्॥
यच्छायामृतसेवनात् सफलतां पुष्णाति कल्पद्रुमः
सद्यः पल्लवमातनोति नितरां श्रीपारिजातोऽपि सः।
गोपालस्य च कामधेनुरमणं काम्यार्थदुग्धं स्वयं
सन्दुग्धे भुवमेष कस्य भवने सेव्यो न रत्नाकरः॥
प्रथमं तावदत्रोक्तं व्यवहारनिरूपणम्।
प्राड्विवाकमताः सभ्योपदेशाश्च ततः क्रमात्॥ इत्यादि।

**End.** विक्रयेण वञ्चितमिति तदनुमतिमन्तरेण अन्यत्र दानविधानात्। विसर्गैवेति नारदवाक्याच्च॥

**Colophon.** इति सप्रक्रियमहासन्धिविग्रहिकठक्कुरवीरेश्वरात्मजश्रीचण्डेश्वरविरचिते व्यवहाररत्नाकरे निर्णयादितरङ्गः।

निर्णीयव्यवहारमागमदृशा यः प्राड्विवाकः स्फुटम्-
++++विचारवादविषयो धर्म्मं नयत्युन्नतिम्।

तेनायं गुणसम्बिविग्रहधुरां धौरेयसन्नीतिना
श्रीचण्डेश्वरमन्त्रिणा विरचितः प्राज्ञेषु रत्नाकरः ॥
समाप्तोऽयं व्यवहाररत्नाकरः ।

विषयः । व्यवहारस्वरूपनिरूपणं । देशाचारादिप्रामाण्यनिरूपणं । प्राड्विवाकादिलक्षण-कथनं । चतुर्व्विधसभानिरूपणं । सभ्योपदेशकीर्त्तनं । विचारविधिकथनं । भाषाविधिकथनं । तत्र चतुर्व्विधपूर्व्वपक्षनिरूपणादिकं । उत्तरविधिकथनं । तत्र कालादिव्यवस्थापनं । उत्तरे विशेषकथनञ्च । प्रतिनिधिविधिकथनं । प्रत्याकलितनिरूपणं । सन्धिविधिकथनं । क्रियादाननिरूपणं । क्रियानिरूपणं । तत्र साध्यादिस्वरूपकथनं । साक्षिणः । साक्षिप्रत्युद्धारविधिः । साक्षिदूषणविधिः साक्षिप्रश्नविधिः । तत्र शपथविधिकीर्त्तनञ्च । साक्षिपरीक्षाविधिः । साक्षिदण्डनिरूपणं । तत्र सत्यापवादनिरूपणं । साक्षिबलाबलनिरूपणं । साक्षिभिगदकथनं । लिखितनिरूपणं । तत्र लौकिकलेख्यस्य सप्तविधत्वनिरूपणं । राजशासनलेख्यस्य त्रिविधत्वकथनञ्च । शासनस्वरूपादिकथनं । दुष्टलेख्यनिरूपणं । लेख्यदौर्बल्यनिर्णयः । भुक्तिनिरूपणं । तत्र अनुपभोगेन असिद्धिकथनं । विच्छिन्नभोगनिर्णयः । युक्तिकथनं । दिव्यनिरूपणं । द्रव्यसंख्यादितो दिव्यविशेषकथनं । तत्र घटाग्निजलादिपरीक्षाविधिकथनञ्च । समयवर्णादितो दिव्यविशेषकथनं । दिव्यदेशविध्यादिनिरूपणञ्च । धर्म्मजयविधिकथनं । शपथविधिः । अष्टविधनिर्णयः । निर्णयबलाबलनिरूपणं । निर्णीतकृत्यनिरूपणं । जयप्रतिपत्तिकथनं । पुनर्न्यायविधिकथनं । कृतनिवृत्तिविधिकथनं । स्वतन्त्रास्वतन्त्रनिरूपणञ्च ।

---

**No 2037.** **विभागसारः ।** Substance, country-made paper, 13 × 4 inches. Folia, 40. Lines, 6 on a page. Extent, 585 Ślokas. Character, Maithilí. Date, ? Place of deposit, Naváni, Post Mádhepura, Darbhángá, Pandit Vañsamaṇi Jhá. Appearance, fresh. Prose and verse. Generally correct.

**Vibhágasára.** A summary of the Law of inheritence. By Vidyápati Mahámahopádhyáya. Contents: Inheritance defined, its nature. Partition of paternal property. Rules regarding partition. Unfitness for partition. Nature of partible property. Indivisible property. Woman's property—its partition. Partition of secreted property. Partition with reference to castes. Partition of partitioned property. Twelve kinds of sons and their shares. Heirs of childless people. Partition of joint property. Mode of partition.

**Beginning.** गङ्गा मेऽस्तौ ममापि प्रा++ कथमच्छो वैष्णवीति प्रसिद्धेः
किन्नाम्ना मेऽस्ति भोगः स तु भवतु तथा भेदभाजः प्रमाणम् ।

मिश्रोऽयं कोऽत्र साक्षी विधिरिति विधिना यन्मितं वीक्ष्यमाणौ
पायास्तां मिश्रिवादौ सपदि हरिहरौ धन्यभावोपरागः ॥
राज्ञो भवेशाद्धरिसिंह आसीत्तत्सूनुना दर्पनरायणेन ।
राज्ञा नियुक्तोऽत्र विभागसारं विचार्य्य विद्यापतिरातनोति ॥

अथ विभागः । विभागोऽर्थस्य पित्र्यस्य पुत्रैर्यत्र प्रकल्प्यते ।
दायभाग इति प्रोक्तं तद्विवादपदं बुधैः ॥

पुत्रैरित्युपलक्षणं । पूर्व्वस्वामिसम्बन्धादेव निमित्ताद् यत्र स्वत्वं स दायः । इत्यादि ।

**End.** स्वभागान् यदि दद्युस्ते विक्रीणीयुरथापि वा ।
कुर्य्युर्यथेष्टं तत्सर्व्वमीशास्ते स्वधनस्य वै ॥

**Colophon.** इति महामहोपाध्यायश्रीविद्यापतिविरचितो विभागसारः ।

**विषयः ।** दायलक्षणकथनं । विभागस्वरूपकीर्त्तनं । तत्र मृतपितृकविभागकथनं । विभागव्यवस्थाकथनं । भागानर्हनिरूपणं । विभाज्यस्वरूपादिनिरूपणं । अविभाज्यनिर्णयः । स्त्रीधनादिनिरूपणं । स्त्रीधनविभागकथनं । गुप्तधनविभागकथनं । वर्णसमवाये विभागकथनं । विभक्तजविभागकथनं । द्वादशविधपुत्रलक्षणकथनपूर्व्वकं तत्र विभागविधिकीर्त्तनं । अपुत्रधनाधिकारिनिरूपणं । संसृष्टधनविभागः । विभागनिरूपणञ्च ।

---

**No. 2038** वृत्तदर्पणः । Substance, country-made paper, 14 x 3 inches. Folia, 40. Lines, 8 on a page. Extent, 1,200 ślokas. Character, Maithilí. Date, ? Place of deposit, Naváni, Post Mádhepura, Darbhángá, Paṇḍit Vaṅsamaṇi Jhá. Appearance, new. Verse and prose. Generally correct.

**Vritta-darpaṇa.** On the laws of versification and the different metres used in Sanskrit poetry. By Kavíndra, son of Ramánánda.

**Beginning.** अगणितवाङ्मयवारिधिसुष्टममणिस्तोभनिष्टताः कवयः ।
जीवन्ति यत्प्रसादात् स पिङ्गलो मङ्गलं तनुताम् ॥
अर्कस्तर्कसरोरुहस्य कवितावामल्लिकाषट्पदः
स + भाकरकल्पनागतगुरुर्यन्याब्धिमन्थाचलः ।
गोपालः सुकृती कणादभणितिव्याख्याकरोऽजायत
व्याचक्रे किल कोविदोत्सवकरीं काव्येषु यः कौमुदीम् ॥
आभीराधीरगम्भा सकलसुख + मां + + + + नियम्मा
संसत्यन्तापहन्ता हरिचरणरजोभक्तिभावानमन्ता ।

सम्भुवः कीर्त्तिधाराधवलितरचरितप्राप्तविधास्तनामा
रामानन्दो गुणीन्द्रः कविकुलकुमुदश्रेणिशुभांशुबिम्बः ॥
तत्पुत्वल कृपा + + गणवतां श्रीजानकीनन्दन·
श्चक्रे यं किल लोकसाक्षधरणीकान्तः कवीन्द्राभिधम् ।
सोऽयं सम्प्रति वृत्तदर्पणममुं निर्म्मातुमीच्छेतरां
सन्तः सन्तु सकौतुकाः शुकगिरः केषां न मेोदोङ्गिरः ॥
रामानन्दतनूजन्मा कवीन्द्रपदभूषितः ।
कुतुकी जानकीनन्दः कुरुते वृत्तदर्पणम् ॥
सानुस्वारो विसर्गान्तो दीर्घः संयुक्तपूर्व्वगः । इत्यादि ।

End. अथ दोषाः । निर्म्मात्री निरनुप्रासः स्थानभङ्गं कलाच्युतिः ।
दौर्बल्यं च + चित्यं नित्यदोषाः प्रकीर्त्तिताः ॥

Colophon. इति श्रीकवीन्द्रकृतौ वृत्तदर्पणः समाप्तः ।

विषयः । छन्दसां लक्षणोदाहरणकथनं । तत्र गणभेदः । गणदेवता । गणमित्रादिकथनञ्च । प्रस्तारकथनं । तत्र मात्रोदिष्टं । वर्णोदिष्टं । मात्रानष्टं । वर्णनष्टं । वर्णमेरुः । मात्रामेरुः । वर्णपताका । मात्रापताका । आर्य्यालक्षणं । गीतिः । (गाथा, उग्गाथा) । गाहूः । विग्गाथा । गाथिनी । परिगीतिः । सिंहिनी । अर्द्धविपुलादिकथनञ्च । वैतालीयप्रकरणं । दोहा । सौराष्ट्री । पादाकुलकं । चित्रा । पज्झटिका । अडिल्ला । मधुभारः । आभीरः । दीपकः । कलिका । गणमाङ्गर्वा । चार्कलिः । चौपैया । पद्मावती । दण्डकलं । त्रिभङ्गी । लीलावती । जलहरणा । दिक्पाली । दुर्म्मिलिका । मदनहरा । मरहट्टा । हरिगीतिका । हीरकं । प्लवङ्गं । वासना । रोला । सिंहावलोकनं । चौरोला । द्विपदं । भुल्लना । घत्ता । घत्तानन्दं । आषाढं । मत्ता । रसमाला । अवलम्बकं । षटपदी । द्विपद । मुण्डलिका । रसिका । माला । खञ्जा । शिखा । गलितकं । उद्गलितकं । (अत्र सेतुकाव्यादुदाहरणमुद्धृतम् ।) मालागलितकं । गन्धानकं । नवपदं । चारुसेना इति मात्रावृत्तकथनपूर्व्वकमेकाक्षरादिषड्विंशत्यक्षरपर्य्यन्तं वर्णवृत्तानां लक्षणोदाहरणकथनं । अथ अर्द्धसमादिवृत्तकथनं । तत्र सुन्दरी । हंसवती । केतुमती । विपरीतपूर्व्वा । सुखदा हरिणप्लुता । शिखालीला । पुष्पिताग्रा । दोधकं । उद्गतादिविषमभेदकथनञ्च । अथ मदितासुरभिद्दण्डकानङ्गशेखरादिसामान्यच्छन्दोनिरूपणं । अथ गद्यभेदनिरूपणं । तत्र मुक्तकलक्षणादिकथनं । उत्कलिकाप्रायं । चूर्णकं । कलिका । मादिका । मैत्रीवादः । अन्तराकलिकादिकथनं । हरिणप्लुतादिविविधगद्यभेदकथनं । अथ विरुदलक्षणादिकं । चण्डवृत्तानि । स्निग्धकं । अस्य एकादशविधप्रभेदनिरूपणञ्च । छन्दोदोषकथनञ्च ।

---

**No. 2039.** पुण्यचन्द्रोदयपुराणम् । Substance, country-made paper, 9 × 5 inches. Folia, 134. Lines, 13 on a page. Extent, 3,484 ślokas. Character, Nágara. Date, Sm. 1850. Place of deposit, Calcutta, Government of India. Appearance, old. Verse. Incorrect.

**Puṇya-chandrodaya Puráṇa.** A Jain version of the Rámáyaṇa, prefaced by an account of some Jinas; alleged to have been related by Mahávíra, on the Vaibhára Hill, at the request of S'reṇika sometimes, but probably incorrectly, called Koṇika, a king of Magadha. The work is divided into 23 cantos. The first is devoted to an introduction. The second gives a brief account of S'reṇika, king of Magadha, and of his wife Chiliní who bore him 7 sons. The king goes to the Vaibhára Hill to pay his respects to Mahávíra, and requests the sage to relate to him the Puráṇa. The third is devoted to descriptions of Jambudvípa, Bháratavarsha, the town of Champá, and its king Harivarma. Then follows (4 to 8) an account of the king of Dhammilla and his adventures with Apsarases, his wars, his abdication of the pleasures of the world for the life of a hermit *(munivrata)* his austerities, and his translation to heaven. In the family of this king (9) Jina took his birth, and assumed the name of Munisuvratanátha. The story of his early life forms the subject of the next canto (10). His hermitage and teachings and conversions follow in the two next cantos and his nírváṇa in canto 13. Then comes the conversion of Yaśodhara, king of Mathurá, by Anantanátha, the 11th Jina, the installation of Hariveṇa as an emperor, and the attainment by him of his *summum bonum* (15). Birth and family of Ṛishabha Deva, the first Jina, his descendants the Bharatas and the Sagaras. (16). Account of S'ruta. Ditto Vasurája, his sojourn and recreations on the Nárada Hill. Fruits of cruelty and benevolence. (17—18). Dilípa's reign in Báráṇaśí. Origin of the Raghus. Account of Ráma and Lakshmaṇa, the metropolis of Daśaratha. Naradeva of Nágapura, Sahasragríva, king of Meghakúṭa; expelled by his nephew S'itakaṇṭha, who established dominion in Lanká. His descendants. (19). Births of Rávaṇa, Báli, Sugríva &c. Sitá born as a daughter of Rávaṇa by Mandodarí, made over to Janaka. Marriage of Ráma with Sítá. Ráma appointed viceking, and deputed to govern Váránáśí; Nárada visits him there. (20—21). A vernal festival celebrated by Ráma, in course of which Sitá is abducted by Rávaṇa. Ráma's brothers and relatives come to him and devise means for the rescue of S'itá. Hanumán assumes the form of a black bee

to go in search of Sítá. Mandodarí offers protection to Sítá. (22, 23). Interview of Hanumán with Rávaṇa. Vibhíshaṇa sides with Ráma, Lakshmaṇa kills Báli, mistaking him for an elephant. Ráma's march to Laṅká. His victory over Rávaṇa. The conquest by Ráma and Lakshmaṇa of different parts of the earth. Their return to Ayodhyá. Daśaratha instals Ráma as the king of the country. Rules regarding the worship of Jina on the 2nd of the waxing moon in Kártika. Ráma worships Jina. Sítá bears eight sons. In grief for the death of Lakshmaṇa Ráma abdicates in favour of his son Lava, becomes an ascetic, and dies.

The work is a most curious one, and is worthy of careful examination. It departs from the Rámáyaṇa account of Ráma in many essential particulars.

Beginning देवेन्द्रार्च्चितसत्पादपङ्कजं प्रणमाम्यहम् ।
आदीश्वरं जगन्नाथं सृष्टिधर्म्मकरं भुवि ॥
कनकच्छूरसच्छायं वृषभाङ्कं वृषोद्धरम् ।
वृषभं जगतां साक्षात्कर्म्मणोऽनन्तसिद्धये ॥
युग्मम् ।
अजितं जितकर्म्माणमनन्तमहसं जिनम् ।
गजाङ्कं दर्पकन्दर्पसर्प-सर्पारिविक्रमम् ॥
अष्टापदसमच्छायं जातं श्रीवृषभान्तरे ।
पञ्चाशत्कोटिवार्द्धीनां भज के (?) भुवनेश्वरम् ॥
युग्मम् ।
अश्वाङ्कं शं भवं चा ये (?) सप्तजम्बूनदत्विषम् ।
सुरासुरैर्नमस्कारपरैः सतप्रजार्च्चितम् ॥
त्रिंशल्लक्षादिकोटीनामम्बुधीनां तदन्तरे ।
प्रादुर्भूतं स्फुरत्कान्तिं स्फुरदंशुमिवापरम् ॥
युग्मम् ।
अभिनन्दननामानं नराणामभिनन्दनम् ।
शुद्धहाटकसङ्काशं सङ्काशं शुद्धहाटकम् ॥
दशलक्षप्रकोटीनामब्धीनामन्तरे भवम् ।
निपतान्याशु संसारमनसन्ततिहानये ॥
— — — — — — — ।
सिद्धान् साधूंस्तथा नत्वा पुण्यहेतोः करोम्यहम् ।
पुण्यचन्द्रोदयं नाम पुराणं सौमित्रिसम्मतम् ॥ इत्यादि ।

End. इन्द्वष्टरसचन्द्रमितेऽथ वर्षे (१६८१) श्रीकार्त्तिकाख्ये धवले च पक्षे
जीवे त्रयोदश्यपराह्णयामे कृष्णेन सौख्याय विनिर्मितोऽयम् ॥
लोहपत्तननिवासमहेभ्यो हर्ष एव वणिजामिव हर्षः ।
तत्सुतः कविविधिः कमनीयो भाति मङ्गलमहोदरकृष्णः ॥
श्रीकल्पवल्लीनगरे गरिष्ठे श्रीब्रह्मचारीश्वर एव कृष्णः ।
काष्ठाबलग्नूर्ज्जितपूरमल्लः प्रवर्द्धमानो हितमातनाम ॥
पञ्चविंशतिसंयुक्तं सहस्रत्रयमुत्तमम् ।
श्लोकसंख्येति निर्दिष्टा कृष्णेन कविवेधसा ॥

Colophon. इति पुण्यचन्द्रोदये मुनिसुव्रतपुराणे श्रीपरमशाके हर्षवीरिकादेहजब्रह्मचारिश्रीमङ्गलदासाग्रजब्रह्मचारीश्वरकृष्णदासविरचिते रामदेवशिवगमनं नाम त्रयोविंशतितमः सर्गः समाप्तः । संवत् । १८५० ।

विषयः । १म सर्गे,—दुर्ज्जननिन्दा-सज्जनस्तुतिकथनं । कवेः सामर्थ्यासामर्थ्यनिरूपणं । वक्तृलक्षणकथनं । श्रुतलक्षणं । एतच्छास्त्रमाहात्म्यकथनं ।

२ये सर्गे,—मगधविषयेषु राजगृहनगरे श्रेणिकाभिधानो नरपतिरासीत् । जैनधर्म्मधुरन्धरस्य तस्य चेलिनी नाम महिषी रूपविद्यासम्पन्नान् सप्त पुत्रान् सुषुवे । अथैकदा वैभारगिरिशिरसि समागतं महावीराभिधानं जिनेन्द्रं द्रष्टुकामोऽसौ राजा तत्र गत्वा प्रणम्य च पुराणमिदं विस्तरेण वक्तुं प्रार्थयामास ।

३ये सर्गे,—जम्बूद्वीपवर्णनं । भारतवर्षवर्णनं । चम्पानगरीवर्णनं । तन्नगराधिपस्य हरिवर्म्मणो वृत्तान्तकथनं ।

४र्थे,—सर्गे,—धर्म्मिल्लनगराधिपतेः भानोः वृत्तान्तकथनं । तस्य नागपुरगमनपूर्व्वकं नागकामिनीदर्शनादिविवरणकथनं । तत्र युद्धादिवर्णनं । कैलासगिरिरामनाथयोगीन्द्रस्य विवरणकथनं । तेन च विदेहाधिपतेः महासेनस्य वृत्तान्तकथनं । अथ रम्यकदेशाधिपतनयाय त्रिविक्रमाय तस्य कन्यासम्प्रदानादिविवरणकथनञ्च ।

५—६ सर्गे,—चम्पानगरीपुरन्दरस्य हरिवर्म्मणः नागकन्यया सह समागमवर्णनं । अथ हरिवर्म्मणोऽनन्तवीर्य्याभिधानजिनयोगीन्द्रात् उपदेशप्राप्तिकथनं । तत्र ब्रह्मचर्य्यादिचतुराश्रमधर्म्मवर्णनं । ततश्च तदुक्तधर्म्मदेशनश्रवणेन जातनिर्व्वेदोऽसौ राजा स्वसुते राज्यं समर्प्य मुनिव्रतं गृहीत्वा तपश्चचार इति विवरणकथनञ्च ।

७—८ सर्गे,—हरिवर्म्मणो ध्यानप्रकारवर्णनं । अथ स्वर्गगतस्य तस्य वैभववर्णनं । आर्य्यावर्त्ताधिवसतेः शोभाभारभृतो मागधस्य विवरणकथनं । हरिवंशस्य राज्ञो वृत्तान्तकथनं । तद्गृहे नभस्तलात् रत्नराशिपतनविवरणकथनञ्च ।

९—१० सर्गे,—जिनदेवस्य हरिवंशपुत्रत्वेन जन्मकथनं । तस्य मुनिसुव्रतनाथेति नामक-

रणकथनं। तस्य अभिषेकसमये इन्द्रादिदेवकृतस्तोत्रवर्णनं। बाल्यलीलावर्णनं। राज्यप्राप्तिवर्णनं। तद्वाहनगजस्य पूर्व्वजन्मनि तालपुरे नरपतिरासीदिति विवरणकथनं। गार्हस्थ्यधर्म्मकथनं।

११—१२ सर्गे,—मुनिसुव्रतस्य दीक्षाग्रहणकथनं। केवलोत्पत्तिकथनं। अर्हद्‌विभवगुण वर्णनञ्च। मथुराधिपतेः मद्गाख्यस्य भूपतेः विवरणकथनं। मद्गीनगराधिपतेर्हत्यात्मकथनं। मद्गीपतिं प्रति मुनिसुव्रतस्य उपदेशकथनं। तत्र संक्षेपेण जैनधर्म्मतात्पर्य्यकथनं। अर्हदर्चनायाः मन्त्रादिकीर्त्तनं। चतुर्थाश्रमधर्म्मकीर्त्तनञ्च।

१३—१४ सर्गे,—मुनिसुव्रतस्य निर्व्वाणप्राप्तिविवरणकथनं। मथुरानाथस्य यशोधरस्य अनन्तनाथनामकचतुर्दशजिनाद्दीक्षादिप्राप्तिवर्णनं। हरिषेणस्य चक्रवर्त्तित्वप्राप्तिवर्णनं। सर्व्वार्थसिद्धिप्राप्तिकीर्त्तनञ्च।

१५—सर्गे,—कालपरिमाणसङ्ख्यादिकथनं। कुलकराणां विवरणकथनं। तद्वंशे ऋषभदेवस्य आदिजिनस्य जन्मकथनं। तत्पुत्रादीनां भरतादीनां वृत्तान्तकीर्त्तनं। क्रमेण सगरादीनां वंशवर्णनं। सुयोधनन्वृपतिकुमार्य्याः स्वयम्बरे सगरस्य गमनवृत्तान्तकथनं।

१६ सर्गे,—श्रुतनामकस्य मुनेरुपाख्यानं। वसुराजस्य उपाख्यानकथनं। नारदपर्व्वताभिधानयोस्तपस्विनोः समित्पुष्पाहरणार्थं रमणीयवनप्रवेशपूर्व्वकं सप्तसङ्ख्याभिः स्त्रीभिः सह रममाणं मयूरमेकं पश्यतोः विवरणकथनं। सगरानुष्ठितपशुयागे केवलं पर्व्वतस्य मुनेरार्त्तिग्रहणविवरणकथनं। हिंसाया दोषावहत्वकथनं। अहिंसायाः परमधर्म्मत्वकथनं।

१७—१८ सर्गे,—वाराणस्यां दिलीपस्य राज्यकरणविवरणं। रघोरुत्पत्तिकथनपूर्व्वकं रघुवंशवर्णनं। रामलक्ष्मणादीनामुत्पत्तिकथनं। पुनरेव अयोध्यायां दशरथस्य राजधानीस्थापनविवरणकथनं। नागपुराधिपतेः नरदेवस्य विवरणकथनं। मेघकूटाधिपतेः सहस्रग्रीवस्य नृपतेः विवरणकथनं। तद्‌भ्रातुष्पुत्रेण सितकण्ठेन युद्धे पराजितस्य सहस्रग्रीवस्य निर्व्वासनवृत्तान्तकथनं। अथ सितकण्ठस्य लङ्कायां राजधानीकरणविवरणं। क्रमेण तत्पुत्रपौत्रादीनां शतकण्ठ-पञ्चाशत्कण्ठपुलस्त्यादीनां वृत्तान्तकथनं।

१९—सर्गे,—मेघश्रीगर्भजातस्य पुलस्त्यपुत्रस्य रावणेति नामकथनं। वालिसुग्रीवादीनां जन्मकथनं। वालिनः समीपात् सप्तकृत्वः रावणस्य पराजयप्राप्तिकथनं। कण्ठे हारधारणेन तस्य दशकण्ठत्वप्राप्तिकथनं। रावणकृतनन्दीश्वरव्रतानुष्ठानकथनं। अथ मन्दोदरी-मनोवेगा-मन्त्रघोषा-मञ्जुघोषाप्रभृतीनां रावणमहिषीणां विवरणं। मन्दोदरीगर्भे सीतायाः जन्मवृत्तान्तकथनं। भूमिखननकाले जनकेन मञ्जूषास्थितकन्याप्राप्तिविवरणं। रामस्य सीतापरिणयादिकथनं। अथ दशरथानुज्ञया यौवराज्याभिषिक्तस्य रामस्य सह सीतया लक्ष्मणेन च वाराणसीगमनपूर्व्वकं तद्राज्यशासनविवरणकथनं। रावणसभायां नारदस्य आगमनवृत्तान्तवर्णनञ्च।

२०—२१—सर्गे,—एकदा वसन्तकाले वाराणसीस्थचित्रकूटोद्याने स्त्रीभिः सार्द्धं रामलक्ष्मणयोः वसन्तोत्सवकरणविवरणं। नारदवाक्येन शूर्पणखामारीचसहायस्य रावणस्य सीताहरण-

वृत्तान्तकथनं। सीताहरणवृत्तान्तं श्रुत्वा जनक-भरत-शत्रुघ्नानां रामसमीपागमनविवरणं। अत्रा-वसरे अञ्जनानन्दन-सुग्रीवयोः स्वयमेव रामान्तिकागमनकथनं। अञ्जनापुत्रस्य हनुमानिति नाम-कारणकथनं। हनुमतो सीतादर्शनार्थं भ्रमररूपेण लङ्काप्रवेशवर्णनं। मन्दोदरीकृतसीतासमा-श्वासनं।

१२—१९—सर्ग,—रावणस्य हनुमता सह संवादकथनं। विभीषणस्य रामपक्षपातित्वक-थनं। गजमेकं सिसितीकृत्य लक्ष्मणेन सह युद्धस्थले वालिनो मृत्युपुरगमनकथनं। वानरबलेन सह लङ्कां प्रविष्टस्य रामस्य रावणवधादिवृत्तान्तकथनं। रामलक्ष्मणयोर्दिग्विजयवर्णनं। पुनरयो-ध्यायां गमनकथनं। दशरथकृतरामराज्याभिषेकवर्णनं। कार्त्तिकशुक्लद्वितीयायां जिनपूजावि-धिकथनं। रामस्य जिनमन्दिरे पूजादिकरणकथनं। सीताया षष्ठौ पुत्रा जाताः। तेषु लघुना-मकाय यौवराज्यं दत्वा रामस्य लक्ष्मणवियोगविधुरस्य वृषभस्य जिनदेवस्य समीपं गत्वा केवल-दीक्षाग्रहणकथनं। अन्यासु तिथिषु जिनपूजाविधिकथनं. रामस्य शिवप्राप्तिकथनञ्च।

---

**No. 2040.** हरिवंशः। Substance, country-made paper, 9 × 3¼ inches Folia, 488. Lines, 9—10 on a page. Extent, 9,344 ślokas. Character, Nágara, Date, Sm. 1841. Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose and verse. Generally correct.

**Harivañsa Puráṇa.** An imitation of the Hindu Harivañsa, giving accounts of several Jinas, abstracts of many Jain legends, details of Jain rites and ceremonies, and histories of ancient dynasties, including the Kurus, the Páṇḍus and the Yádavas, all cast in Jain moulds, and devoted to Jain worship. By Jinasena Ácháryа.

CONTENTS. I. II. Introduction. Birth of Jina as son of Samudra, chief of Kuṇḍapura, in the Videha country. He is named Vardhamána. On the 30th year of his life he retires from home, and for twelve years afterwards performs penance and austerities. Thereby he attains perfect knowledge. He remains silent for 66 days, and then retires to Rájagriha. There, seated on a throne, he sojourns with Indra and other gods and Kauṇḍinya and other sages with their disciples. Chandaná, a princess, approaches him. Nágas, Kinnaras and others repair to his presence. At the request of one Gautama he expounds the Jaina religion in all its branches. He sets the water of religion in motion at Magadha. (*Dharmatírtha-pravarttana.*)

III. The religion spread over Káśí, Káñchí, Draviḍa, Mahárásh-ṭra, Gándhára and other countries. The gratification of beings on

hearing the religion expounded by the sage in the Mágádhi language. His glorious career at Panchaśaila *alias* Rájagṛiha. The religion of Jina as given to his audience. Beings are either perfected (*siddhas*) or imperfect (*asiddha*). The perfected are those who have destroyed all the obstructions to true knowledge. They are of three kinds. The imperfect are those who are attached to falsehood, and thence they suffer pleasure and pain. Beings are again divided into Bhavya and Abhavya. Fruits of evil disposition, delusion, longings. Advantages of forbearing from wine and flesh-meat. Evil works, their fruits. Advantages of overcoming the longings of the senses. Evils of lust. True knowledge and cause of the world's sufferings, causes thereof. Brief accounts of Sanatkumára, Mahendra &c., their fall from heaven. Salvation of one from good works done in his former existence. Gautama relates the Harivaṅśa to S'renika *alias* Jitaśatru.

IV.—VI. Aloka (ákáśa) defined; its inhabitants. Loka defined. Its condition and divisions, its atomosphere, extent thereof. The lowest Loka, the hills there. The middle Loka or the region of the earth, its islands and their extent and number. The highest Loka. The distances of the planets and stars from the earth. The Siddhas live there.

VII. Time defined. Abstract and comparative time. Its divisions into three kinds, past, present and future. Various modes of reckoning time. Measures of length and bulk. Kulakara dynasty reigning between the Ganges and the Sindhu rivers,—its 14 descendants.

VIII. Birth of Ṛishabha, in the above named dynasty. He was son of Nábhi by Maru Deví. Maru's dream of Ṛishabha entering her womb. She is served by goddesses during her pregnancy. The name of the place of birth was S'aketa. Gods come to behold the new-born babe. Wife of Purandara, through the instigation of her husband, carries away the babe to Sumeru, leaving another child in his place. Gods named the babe Ṛishabha, bore his ears, and put earrings therein. Paulamí then brought back the child, and restored him to his parents.

IX. Childhood of Ṛishabha. He marries Nandá and Sunandá, each of whom bore him a son and a daughter. Division of men into Kshatríya, Vaiśya and S'údra to keep them duly employed. Ṛishabha's retirement from home. At Prayága he cuts off his top-knot. His companions assume garbs of bark and grass. He travels about without raiment for six months. He receives a jar of sugar-cane juice from

Somaprabha. Nine rules about gifts. He attains absolute knowledge while performing meditation under a Nyagrodha tree in the garden of the Vṛishabhasena, king of Púrva-tálapura, and makes disciples.

X. He preaches his religion, comprising five duties, namely benevolence, truth, abstinence from theft, avoidance of concupiscence, and freedom from delusion. These duties and their subdivisions described in detail.

XI.—XIII. Bharata, son of Ṛishabha, conquers the universe and accepts in marriage daughters of Mlechchha kings. His brothers become hermits. Jaya, king of Hastinápura, a friend of Bharata, becomes a hermit. Names of Jina's 84 followers *(gaṇigaṇa)*. He goes with his followers to Kailáśa, where he is worshipped by gods and others. Bharata abdicates in favour of his son, and becomes a hermit. His descendants successively become Jaina hermits, and attain nirváṇa. Somajasah, son of Báhubala, and grandson of the Jina, becomes the founder of the Lunar race. Innumerable members of the Lunar race attain nirváṇa. His sixty thousand sons destroyed by a Nága king. Sagara becomes a Jaina, and attains salvation. His surviving son Sambhavanátha and his descendants represent the Ikshäku race.

XIV. Story of Sumukha, king of Kausámbí, and his love for a maiden of his court, by whom he got a son named Hari, whose son Madágiri and his descendants formed the Hari race, (*Harivaṅśa*).

XV.—XVII. The wife of Sumitra, of the Hari race, sees a dream, and gives birth, on the 12th of the waxing moon in the month of Mágha when the moon was in the constellation Śravaṇá, Jinendra in Kuśágárapura *alias* Rájagṛiha. Devas come to worship the child. They place him on Airávata, the elephant of Indra, anoint him, name him Munisuvrata, and then restore him to his mother. In his youth he one night saw beautiful clouds in the sky, and they were soon after dispersed by a high wind. This set him thinking. He becomes a hermit. His death. He is succeeded by his son Daksha, whose son by Ilá was Aila Daksha. Daksha being guilty of incest on his own daughter Manohari, Aila Daksha with his mother retired to the banks of the Narmadá, and established a town named Máhíshmatí. His son Kunema established the town of Kuṇḍina. His son Puloma established Indrapura. His descendants. The Vasu dynasty, its fall.

XVII.—XIX. A king of Mathurá had two sons Súra and Suvíra.

From Súra descended Andhaka-Vṛishṇi, and from Aśura, Bhojaka-Vṛishṇis. Andhaka-Vṛishṇi had ten sons, of whom Vasudeva was one, and two daughters of whom Kunti was the eldest. Descendants of Bhoja Vṛishṇi. Suvasu of the Vasu dynasty, was the founder of the family of Jarásandha whose descendants became Kálayavanas. Religious discourse at Rájagṛiha. Virtuous works. Animals of various kinds. Accounts of the two Vṛishṇi families. Vasudeva cuts off the head of a hunchback woman with his bare hands. Other stories about him.

XX.—XXI. Story of Padma and his covering the three regions with three steps. Stories of Chárudatta and Vasantasaená, daughter of Kaliṅgasena.

XXII.—XXIV. Story of Vasudeva's acceptance of the Jain asceticism at the suggestion of a dancing girl. His peregrinations, marriage with the daughter of Kapilaśruti, who bore him a son named Kapila.

XXV.—XXVIII. Vasudeva kills, in a quarrel with Kártaviryár-yuna, Jamadagni, whose son Paraśuráma destroys the Kshatríya race seven times over. The wife of Kártaviryáryuna, on her husband's death, escapes, and takes shelter in a Jain hermitage, where she gives birth to a son, who destroys the Bráhmaṇa race twenty-one times over. Vasudeva carried away by a she-devil named Súrpanakhá. His adventures. Account of some atheists.

XXIX.—XXXII. Origin of the temple of Kámadevagṛiha at S'rávasti. Story of Kámadeva. Vasudeva marries his daughter Ení, and then marries Rohiṇí at a Sayambara. Balaráma born of Rohiní.

XXXIII.—XXXIV. Vasudeva's journey to Rájagṛiha with his pupils. Account of Kaṅsa, who throws his father Ugrasena into prison, becomes king, and gives his sister Devakí to his tutor Vasudeva. The seventh son of Devakí kills Kaṅsa. Account of the other six sons of Devakí. Account of Arishṭanemi, a Jina. Accounts of various fasts and penances.

XXXV.—XXXVII. Devakí gives birth to two sons. Devas carry them away, leaving two still-born children in their place. Kaṅsa pounds the dead children on a stone. Other sons born and protected. Birth of the seventh son holding the discus, the conch-shell, the mace, and the lotus, on the 12th of the wane in Bhádra. The child transferred to the house of Nanda, whose new-born daughter is brought and kept in its place. Kaṅsa clips the nose of the female child, and destroys her. Kṛishṇa's

career at Vrindávana, destroying various demons (as described in th Bhagavata Purána). Krishna and Balaráma return to Mathurá, destroy various demons, and then Kañsa, instal Ugrasena as king, and marry Reváti and Satyabhámá, the two daughters of Suketa, king of Rajatádri Jarásandha avenges the murder of his relative Kañsa, and overthrow the two brothers.

XXXVIII.—XL. Birth of Arishṭanemi, (details similar to wha have been given about the birth of Rishabha and other Jinas). The fligh of the Yádavas from Mathurá they are chased by Jarásandha as far a the Vindhyan chain.

XLI.—XLIV. Yádavas build Dvárká and settle there. Account o Nárada, his power of travelling in the sky. Krishṇa marries Rukmiṇí Satyabhámá and others. Balaráma's marriage with Revatí, Sítá, Varudha vatí, Rájívanetrá and others.

XLV.—XLVI. Account of the Kauravas and the Páṇḍavas as in the Mahábhárata, diversified by many new incidents, and names of place and circumstantial details changed.

XLVII.—LII. Pradyumna's amours. Sámba's birth. Account of th descendants of Balaráma and Krishṇa in great detail. Jarásandha assail Krishṇa. A great war follows, in which Jarasandha is killed by Krishṇa Account of Durgá and her redemption by Jain worship. Conversion o the Kauravas and Karṇa to Jainism.

LIII.—LIV. Wars of Krishṇa in the southern peninsula. Rape o Draupadí by Padmanátha, a king who lived beyond the ocean. He rescue by her husband, aided by Balaráma and Krishṇa.

LV.—VI. Marriage of Aniruddha with Ushá. Krishṇa's picnic o the Raivata Hill. Ascetic feeling of Nemí. His adoration by Indra an other gods. His departure for Girirája for penance. His meditations Various kinds of pain to which created beings are subject; their charac ter, and the means of overcoming them. Meditation of Raudra. Medita tion of Dharma. The waves of worldly inclinations. Pure meditation o two kinds, conscious and unconscious, their differences.

LVII. The different places fit for Jinas. Lectures of Jina to Vara datta and other Yádavas. Nine kinds of speech of the Jina. Origin o creation. Eternity, soul, delusion, self, and true knowledge. The seven conditions of beings. Sentient, and non-sentient objects—their distinc tions and classification. Relation of the body to the soul. Yogas o

various kinds. Works, their distinctions, number &c. Duties of householders. Do. of hermits. Mental functions—how well directed, and how perverted. Virtue and vice. Penance, its distinctions. Suppression of worldly pain and destruction of bondage. Emancipation. The Yádavas having heard these lectures retire to their homes.

LIX.—LXVI. The Víhára of Nemi. Nemi's peregrinations and preachings in different parts of India. The elders of Kṛishṇa become disciples of Nemi. Nemi describes to Satyabhámá, Rukmiṇí and others their former lives. He relates to Kṛishṇa the history of all Jinas both past and future, their birth, career and nirváṇa. The destruction of the Yádava race by the curse of Dvaipáyana. The Yádavas and Dvárká burnt down. Jarasuna, a Yádava, retires from Dvárká to the south. Balaráma and Kṛishṇa, overwhelmed by grief, retire to south Mathurá. There, while resting under a tree, Kṛishṇa is shot in the foot with an arrow. Account of Jarasunu *alias* Jarakumára. Balarama's grief. Paṇḍavas hear of the sad news. Funeral of Kṛishṇa. Baladeva becomes a hermit. The Paṇḍavas accept asceticism, their nirváṇa. The nirváṇa of Nemí.

Beginning. सिद्धं ध्रौव्यव्ययोत्पादलक्षणं द्रव्यसाधनं ।
जैनं द्रव्याद्यपेक्षातः साद्यनाद्यथ शासनं ॥
शुद्धज्ञानप्रकाशाय लोकालोकैकभानवे ।
नमः श्रीवर्द्धमानाय वर्द्धमानजिनेशिने ।
नमः सर्व्वविदे सर्व्वव्यवस्थानां विधायिने ।
कृतादिधर्म्मतीर्थाय वृषभाय स्वयम्भुवे ॥
येन तीर्थमभिव्यक्तं द्वितीयमजितार्थितं ।
अजिताय नमस्तस्मै जिनेशाय जितद्विषे ॥
— — — — — — — — — ॥
इत्थं साधुसहायोऽहमनातङ्कमनुद्धतं ।
देहं काव्यमयं लोके करोमि स्थिरमात्मनः ॥
बद्धमूलं भुवि ख्यातं बहुशाखाविभूषितं ।
पुष्पपुण्यफलं पूतं कल्पवृक्षसमं परं ॥
अरिष्टनेमिनाथस्य चरितेनोद्दलीकृतं ।
पुराणं हरिवंशाख्यं ख्यापयामि मनोहरं ॥

द्युमणिद्योतनं द्योतं द्योतयन्ति यथाणवः ।
मणिप्रदीपखद्योतविद्युतोऽपि यथातथं ॥
द्योतितस्य तथा तस्य पुराणस्य महात्मभिः ।
द्योतने वर्त्ततऽत्यन्तो मादृशोऽप्यनुरूपतः ॥
विप्रकृष्टमपि ह्यर्थं सौकुमार्य्ययुतं मनः ।
सूरिसूर्य्यकृतालोकं लोकचक्षुरिवेक्षते ॥
पञ्चधा प्रविभक्तार्थं क्षेत्रादिप्रविभागतः ।
प्रमाणमागमाख्यं तत् प्रमाणपुरुषादितं ॥
तथा हि मूलतन्त्रस्य कर्त्ता तीर्थंकरः स्मृतः ( स्वयं ) ।
ततोऽप्युत्तरतन्त्रस्य गौतमाख्यो गणाग्रणीः ॥
उत्तरोत्तरतन्त्रस्य कर्त्तारो बहवः क्रमात् ।
प्रमाणं तेऽपि नः सर्व्वे + सर्व्वोक्तयनुवादिनः ॥ इत्यादि ।

**End.** जयत्वजय्या जिनधर्म्मसन्ततिः प्रजासु हि क्षेमसुभिक्षमस्तु नः ।
सुखाय भूयात् प्रतिवर्षवर्षणैः सुजातशस्या वसुधा सुधारिणाम् ॥
शाकेष्वब्दशतेषु सप्तसु दिशं पञ्चोत्तरेषूत्तरां
पातीन्द्रायुधनाम्नि कृष्णनृपजे श्रीवल्लभे दक्षिणां ।
पूर्व्वां श्रीमदवन्तिभूभृति नृपे वत्सादिराजेऽपरां
सौर्य्याणामधिमण्डले जययुते वीरे वराहेऽवति ॥
कल्याणैः परिवर्द्धमानविपुलश्रीवर्द्धमाने पुरे
श्रीपार्श्वालयनन्नराजवसतौ पर्य्याप्तशेषः पुरा ।
पश्चाद्दोस्तटिकाप्रजाप्रजनितप्राज्यार्च्चनावर्च्चने
शान्तेः शान्तिगृहे जिनेश्वरचितो वंशो हरीणामयं ॥
व्युत्सृष्टापरसंघसन्ततिबृहत्पुन्नाटसंघान्वये
प्राप्तः श्रीजिनसेनसूरिकविना लाभाय बोधेः पुनः ।
दृष्टोऽयं हरिवंशपुण्यचरितः श्रीपार्श्वतः सर्व्वतो-
व्याप्ताशामुखमण्डलः स्थिरतरः स्थेयात् पृथिव्यां चिरं ॥

**Colophon.** इत्यरिष्टनेमिपुराणसङ्ग्रहे हरिवंशे जिनसेनाचार्य्यस्य कृतौ गुरुपादकमल-वर्णनो नाम षट्षष्टितमः सर्गः ॥ ६६ ॥ इति श्रीहरिवंशपुराणं सम्पूर्णं । संवत् १८४१ । पौषमासे ।

**विषयः ।** १—२ सर्गे,—शास्त्रागमकथनं । भुवसेन-लोहाचार्य्यप्रभृतीनां पूर्व्वाचार्य्याणां नामकथनं । विदेहदेशीयाक्रर्गतकुण्डपुराधिपतेः सिद्धार्थश्रीमन्द्रस्य पुत्रत्वेन जिनस्य जन्मादि-

कथनं। अथ सद्देवस्य वासवस्य जिनाभिषेककरणविवरणं। जिनस्य वर्द्धमान इति नामकथनं। त्रिंशद्वर्षं वर्त्तमानस्य विगतस्पृहस्य तस्य वनगमनपुरःसरं द्वादशवर्षाणि यावत् तपस्यतो घातिसंघातविनाशानन्तरं केवलज्ञानप्राप्तिकथनं। अथ षट्षष्टिदिवसान् मौनावलम्बेन विहरतस्तस्य राजगृहगमनकीर्त्तनं। ततो रत्नसिंहासनोपविष्टस्य जिनेन्द्रस्य समन्तात् इन्द्रादीनां देवानां कौण्डिन्यादीनां पण्डितानां सशिष्याणां दिगम्बराणां संयमपूर्व्वकमवस्थितिकथनं। अथ चन्दनाभिधाना चेटकराजकुमार्य्यपि धौतैकाम्बरसम्वीता भगवतः पुरःसरी बभूव। अत्रान्तरे, साधूनां, व्यन्तरलोकस्थितदेवानां, नागकुमाराणां, किन्नरगन्धर्व्वादीनाञ्च तत्र समागमवर्णनं। अथ गौतमनामा कश्चिद् भगवन्तं तीर्थार्थप्रकाशनाय अनुरुरोध। भगवानपि जिनधर्म्मार्थमुदाजहार। तत्रोद्देशेन यथा, संस्थानव्याख्या, समवायव्याख्या, आचाराङ्गतत्त्वार्थः, सूत्रकृततत्त्वार्थः, प्रश्नितहृदयं, ज्ञातृधर्म्मकथा, श्रावकाध्ययनार्थः, अन्तकृद्दशगोचरः, अनुत्तरदशार्थः, प्रश्नव्याकरणं, विपाकसूत्रार्थः। दृष्टिवादार्थश्चेत्यादि। ततः सर्व्वेषां जिनोध र्म्मप्रचणपुरःसरं स्वस्वस्थानगमनकथनं। मगधेषु जिनगृहावलीनिर्म्माणादिकीर्त्तनं। धर्म्मतीर्थप्रवर्त्तनञ्च।

३ये सर्गे,—काशी-काञ्ची-द्रविड़-महाराष्ट्र-गान्धारादिषु सर्व्वेषु देशेषु जैनधर्म्मप्रचारकथनं। जिनमुखोद्गतां मागधीभाषां कर्णपुटेन पिवतां लोकानां शान्तिवर्णनं। पञ्चशैलपुरापरनामधेये राजगृहे स्थितस्य जिनस्य ऐश्वर्य्यादिवर्णनं। अथैकदा सुरनरतिर्य्यक्प्रभृतीनां धर्म्मशुश्रूषया परितो भगवन्तमुपविष्टानां पुरस्तात् जिनस्य धर्म्मशासनकीर्त्तनं। तत्र सिद्धासिद्धभेदेन जीवस्य द्विविधत्वकथनं। अथ ज्ञानावरणस्य पञ्चविधस्य क्षयेण, दर्शनावरणस्य नवभेदस्य भेदेन, अष्टाविंशतिविधस्य मोहनीयस्य हानात्, चतुर्व्विधस्य आयुषः शेषशोषणेन, चत्वारिंशतो नामधेयस्य गोत्रद्वयस्य च नाशेन, पञ्चविधस्य अन्तरायकर्म्मणः विध्वंसेन च जीवस्य सिद्धत्वं भवति। अपि च सिद्धानां सम्यक्त्व-परमानन्त-केवलज्ञान-केवलदर्शनादिरूपाष्टविधगुणकथनादिकं। अथ मोहस्य उदय-नाशोपशमरूपावस्थात्रितयेण असिद्धोऽपि त्रिविध इतिनिरूपणं। असिद्धस्य च मिथ्यादृष्टि-सासादन-सम्यङ्मिथ्यादृष्टि-संयतासंयत-प्रमत्तसंयत-अप्रमत्तसंयत-उपशान्तकषाय-सम्यक्दृष्टि-क्षीणकषायादिरूपगुणस्थाननिरूपणं। तत्र तत्र सुखदुःखप्राप्तिकारणकथनञ्च। पुनः भव्याभव्यभेदेन जीवानां द्वैविध्यकथनं। कुदृष्टिमायालोभप्रभृतीनां फलकथनं। मधुमांसादिवर्ज्जनेन सुमानुष्यप्राप्तिस्तथा कुकर्म्मभिः कुमानुष्यप्रापणञ्चेतिनिरूपणं। इन्द्रियनिग्रहफलकथनं। कन्दर्पराश्रितानां कन्दर्पनामकानां देवानां अभियोग्यत्वकिल्विषत्वादिकथनं। सम्यग्दर्शनस्य दुर्लभत्वकथनपूर्व्वकं तदभाव एव संसारसागरनिमज्जनकारणमितिनिरूपणं। पूर्व्वोक्तसम्यक्त्व-परमानन्तादीनां कारणादिकथनं। संक्षेपेण सनत्कुमार-माहेन्द्र-शुक्र-महाशुक्रादिकल्पविवरणकीर्त्तनं। तत्र दिवस्थितानां गत्यादिकथनं। केषाञ्चित् पूर्व्वजन्माभ्यस्तशुभषोड़शकारणानां तीर्थकृतां जिनशासनानुष्ठानेन निर्व्वाणप्राप्तिकथनञ्च। अथ जितशत्रुनामकस्य श्रेणिकराजस्य पुरतो गौतमस्य हरिवंशविस्तारकीर्त्तनं।

४—६ सर्गे,—अलोकाकाशशब्दनिर्व्वचनं यथा,—"न लोक्यन्ते यतस्तस्मिन् जीवाजीवात्मकाः परं"। तत्र जीवपुद्गलयोरवस्थानाभावकथनं। एवं धर्म्माधर्म्मास्तिकादीनां तत्र गतिस्थानाद्यभावकथनञ्च। अथ अलोकाकाशमध्ये लोकस्य स्थितिकथनं। लोकशब्दनिर्व्वचनञ्च। लोकस्य वेत्रासन-मृदङ्गझल्लरीसदृशाकृतित्वकथनं। तत्र चतुर्द्दशरज्जुविभागादिकथनं। लोकस्य घनवातादित्रिविधवायुपरिवेष्टितत्वनिरूपणं। वायूनां परिमाणादिकथनं। त्रिलोकसारोक्तक्रमेण अधोलोकसंस्थानवर्णनं। तत्र नरकादिस्थानकथनञ्च। तिर्य्यक्लोकवर्णनमुखेन द्वीपसागरदेशादिनिरूपणं तेषां संस्थानपरिमाणादिकीर्त्तनञ्च। ऊर्द्ध्वलोकवर्णनं। तत्र नक्षत्रलोकस्य तदितरज्योतिष्काणाञ्च धरातलात् दूरत्वादिनिरूपणं। सिद्धानां जीवानां निवासादिकथनञ्च।

७मे सर्गे,—वर्णगन्धादिहीनो वर्त्तनालक्षणः काल इति कालस्वरूपकथनं। मुख्यगौणभेदेन तस्य द्वैविध्यनिरूपणं। अथ समयवृत्तीनां त्रैविध्यात् तथाविधस्य कालस्य त्रिविधत्वनिरूपणं। निश्वासोच्छ्वास-प्राणस्तोक-लवादीनां लक्षणकथनं। परमाणुलक्षणकथनं तथाहि,—आदिमध्यान्तहीनं विभागशून्यं अतीन्द्रियं मूर्त्तमपि अप्रदेशं परमाणुं जानीयादिति। स्वल्पाकाशस्य षड्भिरंशैर्ज्ञातत्वात् तस्य षडंशत्वकथनं। तथा वर्ण-गन्ध-रस-स्पर्शैः पूरणं गलनञ्च कुर्व्वन्तीति परमाणूनां पुद्गलाभिधानत्वकथनञ्च। ततः संज्ञा-त्रुटि-रेणु-वालाग्र-यूका-यव-अङ्गुल्यादिमानलक्षणकथनं। एवं कल्पपल्यसागरोपमादीनां लक्षणादिकथनं। यत्र क्रमेण वस्तूनां शक्तिरवसर्पति सा अवसर्पिणी, तदन्यथा तु उत्सर्पिणीत्यनयोः लक्षणकथनपूर्व्वकं तत्र प्रत्येकं षट्कालसमत्वनिरूपणं। तत्र अवसर्पिण्यामनुलोमेन षट्समत्वनिरूपणं, यथा,—सुखमा, सुखमा, सुखमा, दुःखमा, सुखमा, सुखमा, दुःखमा, दुःखमा, अतिदुःखमा चेति। एतद्विलोमेन च उत्सर्पिण्यामूहनीयं। अथ प्रथमेषु त्रिषु सुखमासुखमादिषु कालेषु भारतभूमेः कल्पवृक्षभूषितत्वं भोगभूमित्वादिकथनञ्च। ततोऽतीते सुखकारणे कालद्वये गङ्गासिन्धुनद्योर्मध्ये दक्षिणभारते कुलकराणामुत्पत्तिकथनं। तत्र प्रथमतः प्रतिश्रुतिनामधेयस्य कुलकरस्य राज्यशासनविवरणकथनं। ततस्तत्सुतस्य सन्मतिनामकस्य कुलकरस्य विवरणकथनं। एवं क्रमेण क्षेमङ्कर-क्षमन्धर-सीमङ्कर-यथार्थ-विपुलवाहन-चक्षुष्मत्यशस्वि-अभिचन्द्र-मरुदेव-प्रसेनजिन्नामकानां चतुर्द्दशकुलकराणामुत्पत्त्यादिकथनं।

८ सर्गे,—ऋषभस्य जन्मादिकथनं। तत्र, पुरा किल दक्षिणभारते नाभिर्नाम नरपतिरासीत्। तस्य हि मरुदेवीति नाम्ना सुलक्षणा धर्म्मपत्नी बभूव। अथास्या गर्भे भगवान् ऋषभदेवो जनिष्यति तद्धुना सेव्यतामेषा भवतीभिरितिपाकशासनशासनेन श्रीशचीप्रभृतिभिः सुरसुन्दरीभिः सादरं सेव्यमाना मरुदेवी 'भगवान् जिनदेवो वृषरूपेण मदुदरे मुखवर्त्मना प्रविवेशेति' शुभस्वप्नदर्शनेन नितरामानन्दिता प्राप्ते काले जिनदेवं प्रसुषुवे। अथ सुरासुरनरकिन्नरगन्धर्व्वादयः सर्व्वे तमाद्यं तीर्थंकरमवलोकयितुकामास्तत्र समाजग्मुः। यतो हि प्रागेव सुरासुरादिजनतत्रयं साकमितं तत ततः आरभ्य तत्पुरं साकेतमिति समाख्यां प्राप। अथ भर्त्तरादेशेन पर-

अमरसुन्दरी देवमायया सूतिकागारं प्रविश्य शिशुमन्यं तत्र सुखसुप्तं निधाय च ततो जिनदेवं सुमेरुशिखरदेशं निन्ये। सुरपतिरपि सार्द्धं सुरासुरनिकरैः तत्र भगवतो जन्माभिषेकं विधाय वज्रसूचिना कर्णयोः रन्ध्रं सम्पाद्य च रत्नकुण्डलाभ्यामलञ्चकार। अथ भगवन्तं ऋषभेति नाम्ना-सम्बोधयन्तस्ते हिरण्यगर्भ-प्रजापति-स्वयम्भू-प्रभृतिभगवन्नामनिर्व्वचनमुखेन तं तुष्टुवुः। समनन्तरञ्च पौलोमी लोमाञ्चितशरीरा स्वाङ्कमारोप्य जिनदेवं पुनरेव अयोध्यानगरीमासाद्य च सद्य एव शिशुप्रदानेन तत्पितरौ नितरामानन्दसरसीषु निमज्जयाञ्चकार।

९ सर्गे,—अथ भगवान् शक्रेण कराङ्गुष्ठे निषक्तं पीयूषं पिबन् प्रतिदिनं बालचन्द्र इव उपचीयमानो सर्वं समवयस्कैः बालक्रीड़ारसमनुबभूव। अनन्तरञ्च उद्भिद्यमानयौवनकुसुमोऽसौ नन्दा-सुनन्दाभिधानस्य कन्यायुगलस्य पाणिपीड़नमकरोत्। अथ नन्दा, नन्दनं भरतनामकं सुतामपि ब्राह्मीनामिकां युग्ममसूत। असूत च सुनन्दापि महाबलं सुतं सुतामपि लोकसुन्दरीं। अथ नन्दायाम् अष्टनवतिसंख्यामिताः पुत्रा वृषभसेनादयः क्रमेणाजायन्त। ततो नाभेयस्य भगवतः प्रजानां दुरवस्थादर्शनेन जातकरुणस्य क्षतत्राणेन, वाणिज्येन, शिल्पादिसम्बन्धेन च क्रमेण क्षत्रिय-वैश्यशूद्ररूपत्रिविधवर्णविभागकरणकथनं। अथैकदा नृत्यन्तीं नीलाञ्जनाभिधा-नामिन्द्रनर्त्तकीं पश्यतो नाभेयस्य वैराग्योत्पत्त्यनन्तरं देवैः प्रबोधितस्य तस्य शक्रादिवाह्यशि-विकया सिद्धार्थवनगमनकथनं। ततः प्रयागक्षेत्रगमनपूर्व्वकं केशोत्खातकरणकथनं। अथ ध्यानस्थं जिनदेवं परितः स्थितानां क्षत्रियाणां कृतसमाधितया भगवदभिप्रायमजानतामत एव नग्नानां दैववाणीश्रवणेन कुश-चीरवल्कलधारणवृत्तान्तकथनं। अथ षण्मासान् यावद्-कृताहारस्य नग्नस्य जिनदेवस्य पृथ्वीभ्रमणवृत्तान्तकथनं। अनन्तरमेकदा राज्ञः सोमप्रभस्य गृहे समुपस्थिताय जिनाय तेन राज्ञा इक्षुरसपूर्णः कलसो दत्त इत्यनेन दानतीर्थकरोत्पत्तिकथनं। अथ प्रतिग्रहः, स्थानस्थापनं, पादप्रक्षालनं' पूजनं, प्रणतिः, मनःशुद्धिः, वाक्यशुद्धिः, काय-शुद्धिः, एषणाशुद्धिश्चेति दानविधेः नवविधत्वकथनं। अथ एकदा प्रलम्बजटाभारो जिनदेवः पूर्व्वतालपुराधिपतेः वृषभसेनस्य सकटास्याभिधानके महोद्याने न्यग्रोधवृक्षस्याधः ध्यानयोग-मास्थाय केवलज्ञानं लब्धवानिति वृत्तान्तकथनं। तत्र वृत्तान्तमिममुपश्रुत्य समागतानां भरतादीनां जिनस्य आर्हन्त्यैश्वर्य्यमवलोकयतां प्रव्रज्यादिग्रहणविवरणकथनञ्च।

१० सर्गे—जिनस्य धर्म्मदेशनाकीर्त्तनं। तत्र दया, सत्यं, अस्तेयं, ब्रह्मचर्य्यं, अमोहता, पञ्चैतानि सूक्ष्मतया यतिधर्म्म इति स्थूलतया च गृहस्थधर्म्म इति निरूपणं। उक्तविधधर्म्मानु-ष्ठानेन च मोक्षो भवति। एतल्लक्षणो धर्म्मश्च श्रुतज्ञानात् जायते श्रुतज्ञानञ्च द्वादशाङ्गमिति-निरूपणं। तत्र अङ्गानि यथा,—पर्य्याय-अक्षर-पद-संघात-प्रतिपत्ति-अनुयोग-प्राभृतप्राभृत-प्राभृत-वस्तु-पूर्व्वाणि इत्यनेन श्रुतज्ञानविकल्पनिरूपणं। अत्र वर्णपदाद्यवान्तरभेदप्रपञ्चनञ्च। अथ पर्य्यायाङ्गे,—दृष्टिवादप्रदर्शनं। तत्र क्रियादृष्टिवादः तथाहि,—नियति-स्वभाव-काल-दैव-पौरुषैः स्पृष्टैः स्व-परनित्यानित्यैः योगे प्रत्येकं जीवाजीवादेः नवपदार्थस्य भेदाः विंशतिः। यथा,—

अस्ति स्वतो जीवो नियतितः, अस्ति परतो जीवो नियतितः, अस्ति नित्यो जीवो नियतितः, अस्ति अनित्यो जीवो नियतितः, अस्ति स्वतो जीवः स्वभावतः, अस्ति परतो जीवः स्वभावत इत्यादिना। एवमजीवाद्यष्टपदार्थेषु योज्यं। अनेन प्रकारेण १८० भेदा भवन्ति। एवं स्वतः-परयुक्तैः नियत्यादिपञ्चकैः योगे जीवादीनि सप्ततत्त्वानि ७० सप्ततिसंख्यकानि भवन्ति। पुनः स्वतः-नियतिकालाभ्यां गुणितानि तत्त्वानि १४ चतुर्दश। इत्यनेन ८४ भेदाः भवन्ति। अतो नास्तियुक्तैः पूर्व्ववदुक्तैः ८४ भेदाः। यथा,—नास्ति स्वतो जीवो नियतितः, नास्ति परतो जीवो नियतित इत्यादीनि। एवं अजीवादिषु षट्सु तत्त्वेष्वपि योज्यं। इत्यनेन क्रियावाद-दृष्टिप्रदर्शनपूर्व्वकं त्रिषष्टिविधक्रियावाददृष्टिनिरूपणं। तथाहि,—स्यादस्ति जीवः, स्यान्नास्ति जीव इत्यादिसप्तभङ्गैः गुणनीया नवपदार्थाः ६३। अथ अज्ञानिकदृष्टिवादस्य त्रिषष्टिभेदकथनं। तथाहि,—सज्जीवभाववित्, असज्जीवभाववित्, सदसज्जीवभाववित्। अवक्तव्यजीववित्, सद-वक्तव्यजीववित्, असदवक्तव्यजीववित्, सदसदवक्तव्यजीवविदिति। एवमजीवादिषु ऊहनीयं। विनयदृष्टिवादस्य ३२ द्वात्रिंशद्भेदा भवन्ति यथा,—मनो-वचन-काय-दानरूपैश्चतुर्भिः प्रकारैः जनक-जननी-देव-नृपति-ज्ञाति-बाल-वृद्ध-तपस्विषु विनयः कार्य्य इति। तथा परिकर्म्म, सूत्रं, अनुयोगः, पूर्व्वगतं, चूलिका चेति परिकर्म्मादिभेदकथनपूर्व्वकं चन्द्र-सूर्य्य-जम्बूद्वीप-द्वीपसागर-व्याख्यारूपपञ्चप्रज्ञप्तिनिरूपणञ्च। एवमक्षर-पदादिनिरूपणं। सर्व्वेषां श्रोतॄणां श्राव-कधर्म्मदीक्षाकथनञ्च।

११—१२ सर्गौ,—जिनपुत्रस्य भरतस्य दिग्विजयवर्णनं। तत्र गङ्गासागरप्रदेश-दाक्षिणात्य-सिन्धुदेश-हिमालय-वृषभगिरि-म्लेच्छदेशविजयादिकथनं। म्लेच्छराजादीनां भरताय कन्योपहारदानकथनं। अथ भरतस्य आदेशेन तद्भ्रातॄणां स्वस्वराज्यत्यागानन्तरं प्रपन्नजिनदेवशरणानां तेषां प्रव्रज्यादिग्रहणकथनं। भरतस्य ऐश्वर्य्यादिवर्णनञ्च। भरतमित्रस्य हास्तिनपुराधिपतेः जयाभिधानस्य सभार्य्यस्य पूर्व्वजन्मवृत्तान्तस्मरणविवरणकथनं। अथ सभार्य्यस्य जयस्य जिनशासनश्रवणानन्तरं प्रव्रज्याग्रहणकथनं। वृषभसेन-दृढरथ-कुम्भ-शत्रुमदन-देवशर्म्म-गणधर-धनदेव-नन्दनप्रभृतीनां चतुरशीतिसंख्यकानां गणिसङ्घानां नामकथनं। तेष्वाद्यो वृषभापरनामधेयो भगवान् जिनदेव इति कथनं। अथैकदा गणिगणवेष्टितस्य भगवतो जिनस्य कैलासगिरिगमनपूर्व्वकं परिजनलोकं शोकसागरनिमग्नं विधाय सिद्धस्थानगमनवृत्तान्तकथनं। तत्र हि देवतादयः सर्व्वे गन्धपुष्पधूपादिभिः भगवद्देहं पूजयामासुरितिविवरणकथनञ्च। अथ भरतः स्वसुतमादित्ययशसं राजपदे अभिषिच्य जैनदीक्षां जग्राहेतिविवरणकथनं। तत आदित्ययशाः स्वपुत्रं यशःश्रुतिं राजपदाभिषिक्तं विधाय जैनशासनानुष्ठानेन निर्व्वृतिमधिजगामेतिकथनं। एवं क्रमेण बल-सुबल-महाबल-अतिबल-अमृतबलप्रभृतीनामादित्यवंशीयानां सुतन्यस्तराज्यभाराणां चतुर्दशलक्षसंख्यकानां निर्व्वाणप्राप्तिकथनं। अथ बाहुबलनामकस्य जिनकुमारस्य सोमयशा नाम पुत्र आसीत्। स च सोमवंशस्य प्रवर्त्तको बभूव इति कथनं। तत्र सोमयशसः पुत्रो महाबलः

ततः सुबलः, ततो भुजबलः। एवमाद्याः पञ्चाशत्कोटिलक्षसंख्यकाः सोमवंशीया निर्व्वाणं ययु-रिति कथनं। तथैवमुपादीनां कौरवाणां निर्व्वाणप्राप्तिकथनं। एवं नाभेयवंशीयखेचरनाथ-रत्नवज्र-रत्नरथप्रभृतीनां निर्व्वाणप्राप्तिकीर्त्तनं। अथ सगराभिधानस्य चक्रिणः षष्टिसहस्राणि पुत्राः समजायन्त। ते खलु दम्भेन क्षितिं भिन्दानाः कुपितेन नागराजेन भस्मीकृताश्चेति निशम्य सगरस्य जैनदीक्षया मोक्षप्राप्तिकथनं। सगरस्य अपरः पुत्रः सम्भवनाथो नाम, तत्पुत्रः अभिन-न्दनः, ततः सुमतिनाथः, ततः पद्मप्रभः, ततः सुपार्श्वो नाम जिनेन्द्रः, ततः चन्द्रप्रभः, ततः पुष्प-दन्तः, ततः शीतल इत्यनेन इक्ष्वाकुवंशवर्णनं।

१४ सर्ग,—वत्सदेशे कौशाम्बी नाम नगरी आसीत्। तत्र सुमुखो नाम नरपतिर्बभूव। अथैकदा वसन्तसमयेऽसौ करिणमारुह्य कालिन्दीपुलिनोद्यानं प्रविवेश। तत्र हि वसन्तोत्सवे कामिनीमेकां सर्व्वावयवसुन्दरीं निरीक्ष्य अवरोधवत्सलोऽपि सोऽयं तया विना हृदयेन शून्य इवाभूत्। अथ विदितवृत्तान्तेन मन्त्रिणा वनमालाभिधानया तया सह राज्ञः समागमः कारित इति विवरणकथनं। तयोः हरिरितिसमाख्यानः पुत्रो बभूव अस्य च महागिरिर्नाम पुत्रोऽभूत्। ततो हिमगिरिः, ततः सुनयः, इत्यादिना हरिवंशोत्पत्तिवर्णनञ्च।

१५—१७ सर्ग,—हरिवंशीयसुमित्रसमाख्यानस्य राज्ञो महिष्याः पद्मावत्याः शुभस्वप्नदर्श-नवृत्तान्तकीर्त्तनं। अथ तद्गर्भे (माघशुक्लद्वादश्यां श्रवणानक्षत्रे) जिनेन्द्रस्य जन्मवृत्तान्तकथनं। अथ पुरन्दरप्रमुखैः वृन्दारकवृन्दैः कुशाग्रपुरापरनामधेयं राजगृहं परीत्य जिनदेवं प्रणम्य च सुरसुन्दरीभिः तं कुमारमैरावत्यां समारोप्य गिरिराजाधित्यकायां सिंहासने कृताभिषेकं पुनरेव जननीशुभाङ्कमारोप्य च मुनिसुव्रतेति नाम्ना शिशुरभावाहूत इति विवरणकथनं। अथ कुमारः सुरकुमारकनिकरैः संसेव्यमानः सुकुमारके कैशोरे वयसि वर्त्तमानोऽसौ रमणीरत्नेन समलङ्कृतो-ऽप्येकदा नभसि समुदितं जलधरमवलोक्य नितरामानन्दमन्दोहमधिगच्छन्नेव प्रचण्डतरमारुत-वेगेन विलीयमानं तमाकलय्यैवमचिन्तयत्। अहो जलधरोऽसौ कालकवलितानां लोकानां शरीरायुरादीनां विनश्वरताम् प्रदर्शयन् उपदिशन्निव मामेवं कथमस्तमधिययाविति। अथैवं निर्व्विद्यमानोऽसौ सुव्रतनामकं स्वतनयं राज्याभिषिक्तं विधाय विगतस्पृहतया सम्यक् समाधौ निरतो बभूव। अथैकदा षष्ठदिनानि यावत् कृतोपवासोऽसौ भिक्षायै बहिर्जगाम। अथ राज-गृहनिवासी वृषभदत्तनामा कश्चित् तस्मै भिक्षां प्रददौ। अस्मिन्नेव समये पुष्पवृष्ट्यादिरूपपञ्चक-ल्याणवर्णनं। मुनिसुव्रतस्य देहत्यागकथनञ्च। अथ सुव्रतस्तु दक्षनामानं स्वतनयं राज्याभिषिक्तं विधाय निर्व्वाणं प्राप। अथ दक्षः स्वपत्न्यामिलायां ऐलेयाख्यं पुत्रं मनोहरीनामिकां तनयाञ्च अजीजनत्। अनन्तरमेकदा दक्षः प्रजापतिः नवयौवनां मनोहरीं वीक्ष्य विक्षिप्तहृदयतया तामुपयेमे। इलापि रोषकषायितेक्षणा तत्क्षणमेव ऐलेयेन सह दुर्गप्रदेशाभिमुखं प्रजगाम। अथ ऐलेयेन नर्म्मदातीरे माहीष्मतीं नाम्ना नगरीं निर्म्माय कुणिमनामानं पुत्रं राजपदे प्रतिष्ठाप्य तपस्यायै वनं विवेश। अथ कुणिमोऽपि वरदातीरे कुण्डिनाख्यं पुरं संस्थाप्य पुलोमनामके सुते

राज्यभारं निधाय तपश्चरणार्थं वनवासी बभूव। अथ तत्पुत्राभ्यां पौलोम-चरमाख्याभ्यां रेवातीरे इन्द्रपुरसंस्थापनकथनं। पौलोमपुत्रेण महीदत्तेन कुलपुरसंस्थापनकथनं। ततः क्रमेण मत्स्य-अ-योधन-साल-सूर्य्य-देवदत्तानां वृत्तान्तकथनं। देवदत्तपुत्रस्य मिथिलानाथस्य विदेहाधिपत्वकथनं। ततो मिथिलानाथपुत्रादीनां हरिषेण-शत्रु-अभिचन्द्रादीनां विवरणकथनं। अथ अभिचन्द्रस्य वसुनामा पुत्रो बभूव। तत्पुत्राणां हस्तद्रस्-महावसुप्रभृतीनां दशवसूनां विवरणकथनं। चीरक-दम्बनामकस्य वेदविदुषः वसु-नारद-पर्व्वताभिधानाः त्रयः शिष्या अभवन्। तेषु पर्व्वतोऽसौ-चीरकदम्बस्य पुत्र आसीत्। अथैकदा वसुराजसभायां नारदपर्व्वतयोः शास्त्रार्थः संवृत्तः, तत्र नारदेन कर्म्मकाण्डीयवेदभागस्य निन्दितत्वे समर्थिते पराजयं प्रापिते च पर्व्वते वसुराजस्य पर्व्वतपक्षपातित्वेन तत्क्षणमेवाधःपतनवृत्तान्तकीर्त्तनञ्च।

१८, १९ सर्गे,—अथ मथुराधिपस्य यदोर्वृत्तान्तादिकथनं। ततः शूरस्य सुवीरस्य च उत्पत्तिकथनं। अथ शूरात् अन्धकवृष्ण्यादीनामुद्भवकथनं। सुवीराच्च भोजकवृष्ण्यादीनामुत्पत्ति-कथनं। अन्धकवृष्णेः समुद्रविजय-वसुदेवादिदशपुत्रकथनं। कुन्तीमद्राभिधानकन्याद्वयजन्मकथनञ्च। भोजकवृष्णेस्तु उग्रसेन-महासेनप्रभृतयः पुत्रा बभूवुरितिकथनं। अथ सुवसोर्वंशे जरासन्धस्य जन्मकथनं। तत्पुत्राणां कालयवनादीनां जन्मकथनादिकं। अथ सुप्रतिष्ठनामकेन मुनीश्वरेण राजगृहोपस्थितानां देवानां वृष्णीनाञ्च पुरतः नमिभाषितधर्म्मदेशनाकथनं। तथाहि,—अहिंसा, सत्यभाषणं, अस्तेयं, ब्रह्मचर्य्यं निर्मूर्च्छा चेति पञ्चधा साधूनां महाव्रतानि। कायिकादिभेदेन त्रिविधगुप्तिकथनं। सर्व्वानिष्टप्रत्याख्यानरूपसमितिकथनं। देशतो हिंसादिनिवृत्तिरूपाणुव्रतकथनं। दिग्देशानर्थदण्डेभ्यो निवृत्तिरूपगुणव्रतकथनं। अतिथिपूजादिरूपव्रतकथनं। मांस-मद्य-मधु-द्युत-वेश्यादित्यागरूपनियमकथनं। व्रतादीन्येतानि गृहिणामभ्युदयसाधनानीतिनिरूपणञ्च। तथा अनन्तभेदा जीवाः कर्म्मवशात् कुयोन्यादिषु जायन्ते इति कथनं। अथ पृथिवीसलिलादिषु जीवविभागसंख्यादिनिरूपणं। एकेन्द्रियादिपञ्चेन्द्रियपर्य्यन्तं जीवानां शरीरायःप्रमाणादिकथनं। अन्धकवृष्णेः पूर्व्वजन्मवृत्तान्तकथनं। वसुदेवादीनां पूर्व्वजन्मकथनं। ततः अन्धकवृष्णिः समुद्रविजयाय राज्याभिषेकं वसुदेवञ्च समर्प्य सुप्रतिष्ठस्य अन्तेवासी बभूव। तथा-भोजकवृष्णिरपि मथुरायामुग्रसेनमभिषिच्य विधाय निर्ग्रन्थव्रतं जग्राहेतिविवरणकथनं। अथैकदा वसुदेवः समुद्रविजयस्य आदेशेन रमणीयोद्याने वसन् ततोऽन्यत्र निष्क्रमणमभिलाषोऽसौ तत्रागतां समालभनहस्ताम् कुब्जामेकां खलीकृत्य जहार। अथ 'कुमारचेष्टितैरीदृशैरेव त्वं बन्धनागारमीदृशं प्राप्तोऽसीति' साधिक्षेपं कुब्जया अवधीरितोऽसौ वचनमात्मनो विज्ञाय नृपं प्रति वीतश्रद्धतया नगरात् निष्क्रम्य श्मशाने मृतकमेकं निजालङ्करणैरलङ्कृत्य च चितामध्ये तं निक्षिप्य सैवमुवाच 'आर्य्यस्तातसमो राजा पौराः सुखं जीवन्तु अहमद्य हुताशनं प्रविशामीति'। अथासौ कृत्स्नैवमग्निप्रवेशनं प्रदर्श्य ततो विजयखेटाख्यं पुरं प्रययौ। तत्र च स गन्धर्व्वविद्याप्रवीणस्य सुग्रीवेतिनामधेयस्य कस्यचित् क्षत्रियस्य कन्ययोः सोमा-विजयसेनाभिधानयोः पाणिग्रहणं कृत्वा

विजयसेनायामक्रूरनामानं पुत्रं जनयित्वा च ततो कस्याञ्चित् महाटव्यां प्रविवेश। अथासौ विद्याधरकुमारयुगलप्रयत्नेन ततः कुञ्जरावर्त्तनामधेयं विद्याधरनगरमगच्छत्। तत्र च स श्यामाभिधानां विद्याधरकुमारीमुपयम्य कदाचित् तया समालिङ्गितोऽसौ अङ्गारकनामकेन केनचित् विद्याधरशत्रुणा हृतोऽपि आकाशमार्गात् भूमौ निपतन्नेव रूपलक्ष्माभ्यां यक्षकुमारीभ्यां चम्पानगरीं निन्ये। तस्मिंश्च चारुदत्ताभिधानेन केनचित् सज्ञातसौहार्द्दोऽसौ गान्धर्व्वविद्यारहस्योद्घाटनेन गन्धर्व्वसेनानामधेयायाः राजकुमार्य्याः पाणिपीडनमकरोत्।

२०, २१ सर्गे,—उज्जयिनीनाथस्य श्रीधर्म्मराजस्य बलिः, वृहस्पतिः, नमुचिः, प्रह्लादश्चेति चत्वारो मन्त्रिण आसन्। अथासौ राजा मार्द्धं सचिवसङ्घेन आकम्पनादीन् जैनमुनीन् द्रष्टुमना नगरवहिरुद्यानमाययौ। तत्र च तेषां संसर्गेण निर्व्वेदमापन्नः पद्मनामकं स्वतनयं राजपदप्रतिष्ठितं विधाय विष्णुकुमारनामकात् जैनमुनेर्दीक्षां जग्राह। अनन्तरमेकदा राजसिंहासनस्थितस्य पद्मस्य चित्तानुवर्त्तनेन प्रसादमापन्नस्य च 'मयाहं यावत् त्वं राज्येश्वरो भवेति' वलये वरदानपूर्व्वकमेकान्तस्थितस्य तस्य पुरतो बलिविप्रकृतैराकम्पनाचार्य्यादिभिः संप्रार्थितो विष्णुकुमार आजगाम। आगत्य च स बलिविचेष्टितं तस्मै निवेदयन् तस्यैवादेशेन बलिं सभाजयितुं हस्तिनागपुरं प्रति प्रचचाल। तत्र हि स बहुशोऽभ्यर्थनया मुनीनामवस्थानाय बलेः सकाशात पादत्रयमितां भूमिं लब्ध्वा 'पाप पश्य मे पादत्रयं' इति व्याहरन्नेव महाकायतया ज्योतिश्चक्रमास्पृशन् पादेनैकेन मेरुं द्वितीयेन च मानुषोत्तरप्रदेशमाक्रम्य तृतीयस्यावकाशालाभात् प्रभावेणात्यर्थं क्षुभित इव वभौ। अथ सुरासुरप्रभृतिभिः सादरं प्रसाद्यमानोऽसौ शनैरेव महाकायं संहृत्य प्रकृतिमापेदे। अपि च तदनुज्ञया देवादयो बलिं बद्धा विनिरुह्य च दुरात्मानं तं देशान्निर्व्वासयामासुः। इति प्रसङ्गेन विष्णुकुमारचरित्रवर्णनपुरःसरं विस्तरेण चारुदत्तचरित्रकथनं। तत्र गणिकाकलिङ्गसेनादुहितुः वसन्तसेनाया विवरणादिकथनञ्च।

२२—२४ सर्गे,—अथैकदा फाल्गुनोत्सवे गन्धर्व्वसेनया सह वसुदेवस्य पार्श्वजिनेन्द्रप्रतिमापूजनाय तन्मन्दिरप्रवेशकाले नृत्यन्तीं कामपि नीलोत्पलदलश्यामां कन्यां पश्यतो मनोविकारदर्शनेन ईर्ष्याकलुषितहृदया गन्धर्व्वसेना त्वरितं द्वारान्तरेण तं जिनेन्द्रसन्निधिं नीत्वा तेन सह स्तोत्रावल्या भगवन्तं तुष्टाव। अथ स्वगृहमागत्य पादपतनेन प्रियां प्रसादयतो वसुदेवस्य निकटे काचित् वृद्धा धरी, विद्या आजगाम। सा च दत्ताशीर्व्वादा कृतासनपरिग्रहा सती तमेवमाह राजन् श्रूयते चैवमायुष्मता यत् पुरा किल ऋषभेश्वरो निजतनये भरते विन्यस्तराज्यभारः प्रव्रज्यां जग्राह। तदा खलु उग्रभोजाद्याः बहवो राजक्षत्रियाः तपसि निरता आसन्। तेषु नमि विनमिनामानावुभौ भ्रातरौ जिनभक्तस्य पादयोः निरतावभूतां तेन हि अत्यर्थं प्रसादमभ्युगच्छन् जिनभक्तोऽसौ दित्यदित्यभिधानाभ्यां तयोः पत्नीभ्यां विद्याकोषं प्रददौ। तत्र मनु-मानव-कौशिक-गौरिक-गान्धार-भूमितुण्ड-आदित्य-व्योमचर-मातङ्गप्रभृतयो विद्याचार्य्या इतिकथनं। किञ्च, गौरी-प्रज्ञप्ती-रोहिणी-अङ्गारिणी महागौरी-महाश्वेता-मायूरी-कालमुखीप्रभृतीनां

विद्यानां नामकथनं। तथा,—दैत्य-पन्नग-मातङ्गादिभेदेन अष्टौ विद्याधराः कथिताः, तत्र विद्यानां नाम्ना तेषां नामव्यपदेश इति कथनं। तथाहि गौरीणां गौरिक, कौशिकानां कौशिक इत्यादिना स्वयमूह्यं। तत्र विनमिकुलतिलकस्य मातङ्गाभिधानस्य विद्याधरपतेः गोत्रजाहं हिरण्यवती नाम। पार्श्वजिनेन्द्रदेवस्य पूजावसरे या त्वयायुष्मता अवलोकितपूर्व्वा नीलयशा नाम नर्त्तकी, सा हि मदङ्कलालितेति तस्यां प्रीतिर्मे नितरामस्ति। अथेयं भवद्दर्शनादारभ्य शून्येव हृदयेन परित्यक्तपानाशना सततमेव पुरतः स्फुरन्तं त्वामेव पश्यन्ती मदनेनातिभूमिं नीता। सदधुना दर्शनदानेन भवतैव कृतार्थीकर्त्तव्यस्तादृशो जन इत्युक्त्वा हिरण्यवती ततो निष्क्राम। अथैकदा निशायां वेतालकन्यया अपहारितोऽसौ वसुदेवो विद्याधरपुराधिष्ठितं श्रीमन्तं नाम गिरिवरं प्राप्य तत्र नीलयशसः पाणिग्रहणं विधाय च पौरजनप्रमुखात् तस्या जन्मादिविवरणं शुश्राव। अथ नीलकण्ठरूपधारिणा नीलकण्ठाख्येन विद्याधरेण नीलयशोऽपहरणवृत्तान्तकीर्त्तनं। दीनवेशेन वसुदेवस्य देशभ्रमणकथनं। अथ सोमश्रीतिनामिकया कयाचित् कन्यया सह वसुदेवस्य विवाहकथनप्रसङ्गेन सगरपुरोहितकृतसामुद्रिकशास्त्रागमविवरणकथनं, तत्र विस्तरेण नराणां शुभाशुभलक्षणनिरूपणं। अथ वसुदेवस्य तिलवस्तुपुरगमनपूर्व्वकं राक्षसवधानन्तरं पञ्चशतकन्यापाणिग्रहणवृत्तान्तकथनं। ततस्तस्य वेदसामपुरगमनपुरःसरं कपिलश्रुतिनामकं राजानं निपात्य तत्कन्यायाः कपिलायाः पाणिग्रहणवर्णनं। तस्याश्च तस्य कपिलाभिधानपुत्रजननकथनञ्च। अथ वसुदेवस्य शालगुहापुरी-जयपुर-भद्रिलपुर-इलावर्द्धनपुरगमनपूर्व्वकं तत्रत्याभिः राजकुमारीभिः सह विवाहवर्णनञ्च।

२५—२८, सर्गे,—अथ इलावर्द्धनपुरपुरन्दरे दधिमुखेन सह वसुदेवस्य संवादेन कौरवान्वयसम्भूतस्य कार्त्तवीर्य्यस्य कामधेनुनिमित्तं जमदग्निनिपातनं, तथा परशुरामेण कार्त्तवीर्य्यनाशनादिविवरणकथनं। अथ परशुरामः (सप्तकृत्वः) निःक्षत्रियां पृथिवीमकरोदितिकथनञ्च। अत्रावसरे कार्त्तवीर्य्यार्ज्जुनमहिषी अन्तर्व्वत्नी आसीत्। सा हि जामदग्न्यभयेन प्रपलाय्य कौशिकस्य मुनेराश्रमे सुभौमनामकं पुत्रमेकं सुषुवे। अथासौ सुभौमश्चक्रेण जामदग्न्यस्य शिरश्छित्वा एकविंशतिवारान् अब्राह्मणां पृथिवीं चकारेतिवृत्तान्तकथनञ्च। मदनवेगया सह वसुदेवस्य विवाहवर्णनं। तस्यां तस्य अनाधृष्टिनामकपुत्रोत्पादनकथनं। अथ मदनवेगारूपधारिण्याः शूर्पनख्याः वसुदेवहरणपूर्व्वकमन्तरीक्षगमनं, ततो भस्तावरुद्धस्य तस्य परित्राणलाभानन्तरं कन्यापुरगमनपूर्व्वकं वेगवत्यभिधानया विद्याधरकुमार्य्या सह विवाहवर्णनञ्च। प्रसङ्गात् नमिवंशजातस्य विद्युद्दंष्ट्रस्य वृत्तान्तकथनं। विदेहनगरवास्तव्यस्य संजयन्तमुनेश्चरितकीर्त्तनं। पुरा किल श्रावस्त्यामेणीपुत्राभिधानः क्षोणीपतिरभूत्। तस्य हि प्रियङ्गुसुन्दरीतिसमाख्याता सुलक्षणा कुमारी बभूव। अथ वसुदेवस्तस्याः पाणिग्रहणेच्छया तत्पुरीमभ्युपेत्य वाह्योद्याने अवस्थितिं चकार। तत्र चिरं तस्य केनचित् विप्रेण सह संवादेन मृगध्वजमहिषोपाख्यानकीर्त्तनप्रसङ्गात् अलकापुराधीशस्य चित्रवेगस्य हरिश्मश्रुनामधेयस्य नास्तिकेकान्तवादिना विवरणकथनञ्च।

१९—२१, सर्ग,—श्रावस्त्यां कामदेवगृहाख्यया प्रसिद्धस्य जैनमन्दिरस्य नामकारणकथन-ेन कामदत्तनामकश्रेष्ठिस्थापितरतिकामप्रतिमाहात्म्यकथनं। अथ कामदत्तान्वयजातस्य मदेवनामकश्रेष्ठिनः सम्पूर्णपूर्णचन्द्रमुखी बन्धुमती नाम कन्यका आसीत्। वसुदेवोऽपि प्रत्यहं मदेवगृहं प्रविश्य जिनेन्द्रमभ्यर्च्य सरतिं रतिवल्लभमपूपूजत्। अथ सन्तुष्टेन कामदेवेन तस्मै धुमती समर्पितेतिवार्त्तां राज्ञ एणीपुत्रस्य पुत्री निशम्य वसुदेवसौन्दर्य्यामृतं निपीय च नित-मनुरक्तेयं तत्पित्रा वसुदेवाय प्रदत्तेतिविवरणकथनं। एणीपुत्रस्य जन्मादिवृत्तान्तकीर्त्तनञ्च। मसन्धनगराधिपतेस्तनयया प्रभावत्या सार्द्धं वसुदेवस्य विवाहवर्णनं। अथ तस्य म्लेच्छराजसु-ाया जरायाः पाणिग्रहणपूर्व्वकं तस्यां जरत्कुमारनामकपुत्रोत्पादनकथनं। अथ अरिष्टपुरपुरन्द-स्य रुधिरस्य तनयाया रोहिण्याः स्वयम्बरसभां समुद्रविजयजरासन्धादयो बहवो राजानः माजग्मुः। तत्र वसुदेवोऽपि आवलम्बितवेशस्तस्थौ। अथ रोहिणी तस्यैव कण्ठदेशे वरमाल्यं ददौ। अथ बहुभिः राजन्यवर्गैस्तथा समुद्रविजयेन च सह तस्य युद्धे जयलाभकथनं। ततो वजयो 'वसुदेवोऽयमिति' प्रत्यभिज्ञाय भ्रातृस्नेहात् तमालिलिङ्गेतिविवरणकथनं। अथ रोहि-ण्याः शरच्चन्द्रनिभपुत्र एकः समजायत, स च सुतरामभिरामतया राम इति समाख्यामाप। अथ सुदेवस्य परिणीताभिः सर्व्वाभिः सार्द्धं साकेतनपुरीप्रत्यागमनमहोत्सववर्णनञ्च।

२२—२४, सर्ग,—अथैकदा धनुर्व्वेदविशारदैः स्वशिष्यैः कंसादिभिः सह वसुदेवो जरासन्ध-दिदृक्षया राजगृहं जगाम। तत्र च यो हि सिंहपुरवासिनं सिंहरथं जीवग्राहं गृहीत्वा मां दर्शयिष्यति तस्मै ईप्सितेन सार्द्धं देशेन सुतां मे दास्यामीति, घोषणां श्रुत्वा वसुदेवः कंसेन वीर-पताकामग्राहयत्। कंसोऽपि गुरुशासनादेव सिंहरथं बद्धा जरासन्धस्य पुरतस्तमुपढौकयत्। अथ कंसस्य जन्मवृत्तान्तकथनं। तत्र कौशाम्बीवासिन्या मद्यकारिण्या कयाचित् यमुनाप्रवाहे मञ्जूषाबद्धोऽयं प्राप्तः सुतनिर्व्विशेषेण प्रतिपालितश्चेतिकथनं। अथ जरासन्धः मञ्जूषां तामानाय्य तत्रोट्टङ्कितलिपिपाठेन पद्मावत्युग्रसेनयोः पुत्रोऽसाविति स्वभागिनेयाय तस्मै कन्यां जीवद्यशसं प्रददौ। अथ कंसोऽपि मथुरामभ्युपेत्य स्वपितरमुग्रसेनं कारागारे निक्षिप्य च राजपदप्रतिष्ठितो-ऽसौ वसुदेवमानीय स्वसारं देवकीं गुरुदक्षिणात्वेन तस्मै प्रायच्छत्। अथैकदा जरासन्धकुमारी जीवद्यशाः कंसमेवं प्राह मया अतिमुक्तकमुनेः प्रमुखात् श्रुतं देवक्या गर्भे यो हि भविता स खलु पत्युः पितुश्च ते मृत्युरिति। अथ निशम्यैतत् कंसेन वसुदेवं प्रतार्य्य प्रसूतिसमये वासो देवक्या मद्गृहेऽस्त्विति वरः प्रार्थितः सोऽपि अविज्ञातवृत्तान्तस्तस्मै वरं प्रददौ। अथ देवकीवसुदेवाभ्यां कंसज्येष्ठस्य अतिमुक्तकमुनेराश्रमगमनपूर्व्वकं स्वावस्थानिवेदनं। तत्र उग्रसेनकंसादीनां जन्मादि विवरणकथनं। देवकीसमाश्वासनञ्च। तत्र देवक्याः सप्तमे गर्भे शङ्खपद्मगदासिधारी जन्मग्रहणं विधाय कंसादीन् निहत्य च विशेषां क्षितिं भोक्ष्यतीतिकथनं। देवक्याः अन्येषां षणां पुत्राणां रामस्य च पूर्व्वजन्मवृत्तान्तकीर्त्तनं। तत्र नृपदत्त-देवपाल-अनीकदत्त अनीकपाल-शत्रुघ्न-जित शत्रुनामकदेवकीपुत्राणामकालमरणाभावकथनं। अथ जिनेन्द्रस्य अरिष्टनेमिचरितकथनप्रस्तावेन

सर्वोपवासविधिकथनं। तत्र सर्वतोभद्रनामकतपोविधिनिरूपणं। अत्र हि उपवासाः ७५ + पारणाः २५एवं दिनानि मिलित्वा १००शतसंख्यकानि भवन्तीति ज्ञेयं। अथ महासर्वतोभद्रतपो-विधिकथनं। अत्र हि उपवासाः १९६, पारणाः ४९। एवं दिनानि मिलित्वा २४५ पञ्चचत्वा-रिंशदुत्तरद्विशतसंख्यकानीति। अथ त्रिलोकसारतपोविधिकथनं। अत्र उपवासाः ३०, पार-णाः ११, एवं दिनानि मिलित्वा ४१ एकचत्वारिंशत्संख्यकानीति। एवं क्रमेण वज्रमध्यतपोवि-धिकथनं। मृदङ्गमध्यतपोविधिकथनं। मुरजमध्यतपोविधिकथनं। एकावलीतपोविधिः। द्विका-वलीतपोविधिः। मुक्तावलीतपोविधिकथनं। रत्नावलीतपोविधिः। कनकावलीतपोविधिः। सिंह-निष्क्रीडिततपोविधानं। मेरुपंक्तिविधिः। विमानपंक्तिविधिः। (शा) शातकुम्भविधिकथनं। सप्त-सप्तमतपोविधिः। तथा,—अष्टाष्टम-नवनवम-दशदशमदिद्वाविंशद्द्वात्रिंशत्तपोविध्यन्तानां विधान-कथनं। अथ एककल्याण-पञ्चकल्याण-पञ्चविंशतिकल्याणाभिधानानां तपसां भावनादिविधिकथनं। अथ भाद्रशुक्लसप्तम्यां परिनिर्वाणाख्यविधिकथनं। भाद्रकृष्णषष्ठ्यां सूर्यप्रभाख्यविधिः। तत्र त्रयोदश्यां चन्द्रप्रभनामकविधिकथनं। एवं कुमारसम्भव-सुकुमार-सर्वार्थसिद्धिप्रभृतीनां विधि-कथनं। तथा,—जिनकथिते मोक्षमार्गे निःशङ्काद्यष्टगुणा श्रद्धा दर्शनविशुद्धिरित्याख्यायते एत-दनुष्ठानेन च तीर्थकरस्यैव प्रकृतिर्भवतीतिकथनं। ज्ञानादिषु ज्ञानादिवत्सु च कषायविनिवृ-त्त्या महान् आदरो विनयसम्पन्नता ख्यः। तथा शीलव्रतरक्षायाम् अनवद्या कायमनोवचनवृत्तिः, शीलव्रतेष्वनतिचाराभिधानः। तथा जन्म-जरा-मरणामय-मानस-शारीरदुःखसम्भारात् संसारात् भीरु-त्वं संवेग इति कथ्यते। इत्यनेन प्रकारेण ज्ञानयोग-त्याग-साधुसमाधि-वैयावृत्य-अर्ह-दाचार्य-बहुश्रुत-प्रवचनभक्ति-आवश्यकापरिहाणि-कायोत्सर्ग-मार्गप्रभावन-प्रवचनवत्सलतादिलक्षणकथनञ्च।

३५—३७,सर्गे,—अथ देवक्या युग्मपुत्रजनने देवानां तत्र मृतपुत्रयुग्मस्थापनपूर्वकं तत्पुत्रद्वय-प्रहरणानन्तरम् अलकागमनकथनं। कंसस्तु तन्मृतपुत्रद्वयं गृहीत्वा शिलातले ताडितवानितिक-थनं। एवं वारत्रयेण देवक्याः षट्पुत्रजननं दैवैश्च रक्षणं, कंसस्य तु सप्रकृतस्य शिलातले मृतपुत्र-ताडनमेवेति विवरणकथनं। अथ देवक्याः सुस्वप्नदर्शनपूर्वकं गर्भधारणकथनं। भाद्रशुक्लद्वादश्यां शङ्खचक्रादिलाञ्छितस्य अधोक्षजस्य देवकीपुत्रत्वेन जन्मग्रहणकथनं। अथ बलदेवः स्वपित्रा धृतातपत्रं कृष्णमङ्के निधाय दीप्तशृङ्गेण वृषभरूपधारिणा नगरदेवेन प्रदर्शितमार्गोऽसौ भगवत्-प्रभावेण क्षीणप्रवाहां यमुनामुत्तीर्य नन्दालयमभ्युपेत्य च तत्कन्यापहरणपूर्वकं तत्स्थाने श्रीकृष्णं संस्थाप्य त्वरितमेव मथुरामाजगामेति वृत्तान्तकीर्तनं। अथ कंसस्य देवक्याः सूतिकागारं प्रविश्य 'कदाचिदमुष्याः पतिररिर्मे भवे'दिति शङ्कया तां कन्यां समादाय नासिकाच्छेदनपूर्वकं ताडनवृत्तान्तकीर्तनं। अथ कृष्णस्य पूतनाशकटासुरवध-यमलार्जुनमोचन-गोवर्द्धनधारणादि-वृत्तान्तकथनं। अथैकदा देवक्या नन्दालयगमनपूर्वकं श्रीकृष्णदर्शनवृत्तान्तकथनं। अथ बलदेव-कृष्णाभ्यां मथुरागमनपुरःसरं केशि-अश्व-चाणूरमुष्टिकनिपातनवृत्तान्तकथनं। अथ कंसवधानन्तरं उग्रसेनाय राज्यदानवृत्तान्तकथनं। रक्षतादिनामधेयस्य सुकेतोः कन्याभ्यां रेवतीसत्यभामाभ्यां सह

रामकृष्णयोर्विवाहकथनं । अथ जरासन्धस्य दुहितुर्जीवद्यशसः [illegible] [illegible]
निधनार्थं कालयवनाभिधानमिजपुत्रप्रेरणं तथा चतुर्दशवारासमरेष्वेतस्य [illegible] [illegible]
निधनवृत्तान्तकथनञ्च । अथ जरासन्धप्रेरितस्य तद्भ्रातुरपराजितस्य वारं वारं पराजयकीर्त्तनं । वसुदेव-

३८—४०, सर्गे,—यथावसरे कुबेरपत्न्याः शिवाया स्वप्नदर्शनादिवृत्तान्तकथनं । अथ श्री-
अरिष्टनेमिनामकस्य जिनेन्द्रस्य जन्मवृत्तान्तकथनं । पूर्व्ववत् पुरन्दरादिवृन्दारकवृन्दैरभ्यर्चितस्य
पुरन्दरसुन्दर्य्या शिवातनयग्रहणपूर्व्वकं तेभ्यः समर्पणविवरणकथनं । अथ तेषां सुमेरुशिखरमी-
तस्य शिशोरभिषेकनामकरणादिकरणविवरणकथनं । अथ महेन सह स्वपुरागतजिनेन्द्रबालकथना-
दिकञ्च । अथ जरासन्धः भ्रातुर्निधनवार्त्तां श्रुत्वा क्रोधेन ज्वलन्निव यदुकुलनिधनाय सार्द्धं चतु-
रङ्गबलैः मथुरामुद्दिश्य प्रययौ । वृत्तान्तमिममाकर्ण्य तदाजेयमिति मत्वा दृष्णिभोजयादवादयः
सर्व्वे सार्द्धं प्रियजनैः वारुणीं दिशमुद्दिश्य गन्तुमारेभिरे । अथ जरासन्धोऽपि तेषामनुगामी बभूव ।
अथैकदा यादवादयः सर्व्वे विन्ध्यगिरिमुपान्तस्थितमासाद्य जरासन्धस्यानुवर्त्तनं निशम्य च
युयुत्सया तं प्रत्यैक्षन्त । तदा खलु दैवनियोगेन भरतार्द्धनिवासिभिः दिव्यसामर्थ्यादेव बह्वश्चिता
निर्म्मिताः । अत्रान्तरे समुपस्थितोऽसौ जरासन्धः ज्वालामालाभिर्दह्यमानमिव यादवबलं पश्यन्
तत्रागतां वृद्धामेकामपृच्छत् । ‘भद्रे विपुलः कस्यायं स्कन्धावारो दह्यत इति । सा च यादवशिबि-
रैषमुवाच, देव श्रूयतां, राजगृहाधिपतेरमितप्रभावस्य जरासन्धस्य प्रभावेण सशल्यहृदयानां
शान्त्यै सागरमाश्रितानामपि यादवानां तमासन्नवर्त्तिनं विज्ञाय सबलानां तेषां वह्निप्रविष्टानां
चितारालिरियं पुरतो दृश्यत इति । अथ निशम्य जरतीवाक्यमेवं विस्मितोऽसौ सह सुहृज्जनैः
प्रतिनिवृत्य च राजगृहमाजगाम । अथ यादवोऽपि उपकण्ठमुदन्वतः कृतनिवेशना यथा सुखम-
वतस्थिरे ।

४१—४४, सर्गे,—द्वारकानिर्म्माणं । श्रीकृष्णस्य राजन्यवर्गकन्यापरिणयनकथनं । नेमिकुमार-
संवर्द्धनविवरणं । नारदस्य द्वारवत्यामागमनकथनमुखेन तस्य जन्मविवरणकीर्त्तनं । तत्र शौर्य्य-
पुरनिवासिन उञ्छवृत्तेः सुमित्राभिधेयस्य तापसस्य पुत्रोऽयं देवानामनुग्रहेण अष्टमे वर्षे सरहस्य-
जिनागममधीत्य अधिगम्य च आकाशगामिनीं विद्यां साधुनिषेवया संयमासंयमं लेभे-इति
वृत्तान्तकथनं । नारदस्योपदेशेन श्रीकृष्णस्य रुक्मिणीहरणविवरणकथनं । अथैकदा श्रीकृष्णेन
रुक्मिणीमुखनिष्ठ्यूतं ताम्बूलसंपृक्ताम्बेन संगोप्य ईर्षाकषायितायाः सत्यभामायाः शयनमन्दिरं-
गतेन तेन तद्गन्धवस्त्विति’ बुद्ध्या अपहरन्ती सेयं परिहसिता आमध्याह्नविलम्बेन रूपिणीं देवता-
मिव रुक्मिणीं निरूप्य विकीर्य्य च कुसुमाञ्जलिं पादयोस्तस्याः स्वसौभाग्यमयाचतेति वृत्तान्तक-
थनं । अथ रुक्मिण्याः पुत्रजन्मानन्तरं धूमकेतुनामकेनासुरेणापहृतस्तनयोऽस्याः खदिराटवीम-
ध्यस्थशिलायाः स्थापितोऽसौ मेघकूटधराधिपस्य कालसम्बराख्यस्य राज्ञो महिष्या कनकमालया
समधिगतः पुत्रनिर्व्विशेषेण प्रतिपालितश्चेति वृत्तान्तकीर्त्तनं । अथ नारदस्योपदेशेन पुत्रवार्त्ताजि-
ज्ञासया तमेव श्रीकृष्णः प्रेरयामास इति विवरणकथनं । ततो नारदस्य विदेहवासि-सीमन्धर-

जिनेन्द्रसमीपगमनपूर्व्वकं तन्मुखात् मधुकैटभावेव प्रद्युम्नशाम्बरूपेण जन्मान्तरं प्राप्ताविति विवरणं श्रुत्वा तदादेशेनैव मेघकूटगमनपुरःसरं प्रद्युम्नदर्शनादिवृत्तान्तकथनं। सत्यभामातनुजस्य भानोर्जन्मकथनं। अथ नारदस्योपदेशेन जम्बूपुराधिपस्य जाम्बवस्यात्मजां जाम्बवतीं नाम्ना हृत्वा तद्भ्रात्रा विष्वक्सेनेन सह श्रीकृष्णस्य द्वारकायां प्रत्यागमनकथनं। अथ कृष्णेन सिंहलेश्वरदुहितुः लक्ष्मणायाः पाणिग्रहणविवरणकथनं। अथ श्रीकृष्णस्य सौराष्ट्रगमनपूर्व्वकं नमुचिं निहत्य तद्भगिन्याः सुसीमायाः पाणिग्रहणकीर्त्तनं। एवं क्रमेण श्रीकृष्णस्य गौरी-पद्मावती-गान्धारीप्रभृतीनां पाणिग्रहणवृत्तान्तकीर्त्तनं। हलिनस्तु रेवती-बन्धुमती-सीता-राजीवनेत्राणां पाणिपीडनकथनं।

४५—४६, सर्गौ,—युधिष्ठिरादीनां जन्मकथनमुखेन कुरूणां वंशावलीकथनं। तत्र नाभेयसमकालीनयोः हास्तिनपुराधिपयोः श्रेयःसोमप्रभयोः वृत्तान्तकथनं। तत्र सोमप्रभपौत्रस्य कुरोः कुरुवंशप्रवृत्तिकथनं। ततः क्रमेण तद्वंशीयानां कुरुचन्द्र-धृतिकर-धृतिमित्र-धृतिदृष्टि-भ्रमरघोष-हरिघोष-सूर्य्यघोष-पृथुविजय-जयराज-सनत्कुमार-सुकुमार-नारायण-नरहरि-शान्तिचन्द्र-सुदर्शन-सुचारु-चारु-पद्ममाल-वासुकि-वसु-वासव-इन्द्रवीर्य्य-विचित्रवीर्य्य-चित्ररथ-पाराशर-शान्तनु-धृतकर्म्मादीनां नामादिकथनं। अथ धृतपुत्रस्य धृतराजस्य अम्बाऽम्बालिकाम्बिकेतिसमाख्यास्तिस्रः प्रियाङ्गना आसन्निति कथनं। तासु धृतराष्ट्र-पाण्डु-विदुराणां जन्मकथनं। सुयोधनयुधिष्ठिराश्वत्थामादीनां जन्मादिकथनं। अथ निर्व्वासितानां गृहदाहमुक्तानां पाण्डवानां वेशपरिवर्त्तनपूर्व्वकं कौशिकपुरी-श्लेष्मातकवसुन्धरापुरादिगमनविवरणकथनं। तत्र युधिष्ठिरस्य वसन्तसुन्दरीसमागमलाभवर्णनञ्च। अथ सभ्रातृकस्य तस्य त्रिशृङ्गपुरगमनपूर्व्वकं प्रभा-सुप्रभा-पद्मादीनां राजकुमारीणां पाणिग्रहणवृत्तान्तकथनं। हिडिम्बादिसंवादकथनं। ततः पार्थानां द्रुपदराज्यगमनपूर्व्वकं द्रौपदीलाभविवरणकीर्त्तनं। द्यूते पराजितानां पाण्डवानां वनवासादिवृत्तान्तकथनं। अथ तेषां रामगिरिगमनानन्तरं रामलक्ष्मणप्रतिष्ठितजैनालयादिदर्शनविवरणकथनं। ततो विराटनगरस्थितानां तेषां वेशपरिवर्त्तनादिवृत्तान्तकथनं। द्रौपदीलुब्धस्य कीचकस्य भीमात् परित्राणलाभानन्तरं तपश्चर्य्यया निर्व्वाणकथनं। द्रौपदीकीचकयोः पूर्व्वजन्मवृत्तान्तकीर्त्तनञ्च।

४७—५२। सर्गौ,—प्रद्युम्नचरितकीर्त्तनं। तस्य विविधालङ्करण-कुसुमवाण-कुसुमशयनादिलाभविवरणकथनं। सम्बरनिग्रहकथनं। तद्गृहस्थितायाः दुर्य्योधनदुहितुः कनकलतायाः वृत्तान्तकथनं। प्रद्युम्नस्य कनलतालाभपूर्व्वकं नारदोपदेशेन द्वारकामुद्दिश्य प्रचलतः रामकृष्णाभ्यां युद्धवर्णनं। ततः नारदप्रमुखात् लब्धपरिचयस्य तस्य द्वारकापुरीप्रवेशमहोत्सवादिवर्णनं। शाम्बस्य जन्मादिविवरणकथनं। अक्रूरादीनां श्रीकृष्णपुत्राणां नामादिकथनं। तथा यदुकुलकुमाराणां प्राधान्येन प्रत्येकं नामकथनं। तेषाञ्च सार्द्धत्रिकोटिसंख्याकथनं। यशोदातनुजायाः कंसनिराकृतायाः दुर्गायाः पूर्व्वजन्मादिविवरणकथनं। जिनसेवया तस्या निर्व्वाणप्राप्तिकीर्त्त

मत्र। अथ कृष्णमभियोधयितुं मगधस्य जरासन्धस्य द्वारकागमनद्दत्तान्तकथनं। यादवमागधयोः युद्धे समवेतानां तदुभयपक्षमाश्रितानां प्रत्येक नामादिकथनं। तत्र महासमरवर्णनं। कृष्णकृत-जरासन्धवधवर्णनञ्च। अथ जरासन्धस्य निधनानन्तरं श्रीणदुर्य्योधनदुःशासनादीनां निर्व्वेदमापन्नानां विदुरसमीपात् जैनदीक्षादिग्रहणकथनं। कर्णस्तु यत्र सुदर्शनोद्याने कर्णकुण्डले विहाय दमधरसमीपात् जैनदीक्षां जग्राह, मतृस्थानं कर्णसुवर्णाख्यया सुविख्यातमितिकथनं।

५३—५४, सर्ग.—जरासन्धप्रभृतीनां यादवानामानन्दस्थानमानन्दपुरमित्याख्यं जैनमन्दिरसुन्दरं जातमितिकथनं। अथ श्रीकृष्णस्य दक्षिणदेशादिविजयवर्णनं। तेन च महदेवाय यदुवंशीयाय राजगृहपुरम्, उग्रसेनसुताय माथुरं, पाण्डवेभ्यः हास्तिनपुरं, रुक्मनाभाय कोशलपुरञ्च दत्तमितिकथनं। अथैकदा नारदस्योपदेशेन धातकीखण्डभारतान्तर्गतामरकङ्काभिधानपुराधिपस्य पद्मनाभस्य द्रौपदीहरणद्दत्तान्तकथनं। अनन्तरं विदितद्दत्तान्तानां पाण्डवानां सार्द्धं बलकेशवादिभिर्यदुबलैश्च देवरथसाहाय्येन लवणाम्बुधिमुत्तीर्य्य तत्पुरं समुपस्थितानां तेषां द्रौपदीपुनरुद्धारविवरणकथनं। अथ भूय एव तेनोपायेन सागरमुत्तीर्य्य वेलायां समागतानां मलयभूधरशोभादर्शनेन ह्रतचित्तानां तेषां तत्र मथुराभिधानपुरीनिर्म्माणपूर्व्वकमवस्थानादिविवरणकथनं।

५५—५६, सर्ग,—बाणदुहित्रा उषया सह प्रद्युम्नतनयस्य अनिरुद्धस्य विवाहादिवर्णनं। श्रीकृष्णस्य रुक्मिण्यादिभिः सह रैवतकविहारवर्णनं। नेमिजिनस्य वैराग्योत्पत्तिविवरणकथनं। इन्द्रादिभिः सुरनिकरैस्तस्य अभिषेकानुष्ठानद्दत्तान्तकथनं। अथ बलकेशवादिभिर्निषिध्यमानोऽपि जिननेमिस्तपश्चरणार्थं गिरिराजं जगामेतिविवरणकथन। तत्र जिनस्य ध्यानानुष्ठानकथनप्रसङ्गेन ध्यानस्वरूपकथनं। तत्र अस्थिरस्य मनसो घनसंहननतया एकाग्रचिन्ताया अन्तर्निरोधो ध्यानमितिनिरूपणं। तच्च दुःखविघाताय अनुष्ठेयं। ध्यानञ्चार्त्तं रौद्रञ्चेति द्विविधं। तत्र वाह्यमान्तरञ्चेति तद्द्वैविध्यं। वाह्यञ्च आक्रन्दनादिकं। आन्तरन्तु चतुर्भेदं यथा, अनादेयस्य विषयस्य अनुत्पत्तिचिन्तनं, उत्पन्नस्य च तस्य वियोगचेष्टा, तथा मनोज्ञवस्तुविप्रयोगस्यानुत्पत्तिचिन्तनं, उत्पन्नस्य च तद्वियोगस्य अन्तचिन्ता चेति। तत्र अनुपादेयदुःखस्य साधनं चेतनादिकमिति ज्ञेयं। तत्र वाह्यविषशस्त्रादिकम्। आध्यात्मिकं वातादिप्रकोपजं। शारीरं दन्तशूलादिनिबन्धनं। मानसञ्च शोकदौर्मनस्यादिकमिति चतुर्व्विधं। सर्व्वस्यास्य अमनोज्ञस्य उत्पत्तिर्माभूदितिचिन्ताप्रबन्ध आर्त्तध्यानमिति ज्ञेयं। एतत्तु मलाविलमिति समाख्यातं। संकल्पाध्यवसानरूपं द्वितीयन्तु उत्पन्नस्यामनोज्ञस्यास्य कथमभावः स्यादिति। अथ मनोज्ञस्य पुत्रकलत्रधनधान्यादेः सुखसाधनत्वं वाह्यमिति ज्ञेयं। आध्यात्मिकञ्च ततपित्तादिसाम्येन आरोग्यादिकं। मानसं खलु सौमनस्यादिरूपमिति। अथ ऐहिकामुत्रकस्य मनोज्ञस्य वस्तुनो विप्रयोगो माभूदितिसंकल्पस्तृतीयमार्त्तध्यानं विज्ञातव्यं। अथ पूर्व्वोत्पन्नस्य मनोज्ञविप्रयोगस्य अभावे अध्यवसानं चतुर्थमार्त्तध्यानमिति। अथ रौद्रस्य ध्यानस्य हिंसा-संरक्षण-स्तेय-मृषानन्दभेदेन चातुर्व्विध्यकथनं। तत्र

हिंसादिषु यथायथमभिरुचिः हिंसानन्दादय इति ज्ञेयं। अथ मुमुक्षुः परिहृत्य आर्त्त-रौद्रे द्वे पापध्याने भावशुद्धिसाधनेन योगमभ्यस्य धर्म्मध्यानं कुर्य्यादिति। धर्म्मश्च बाह्याध्यात्मिकभावानां याथात्म्येन अध्यवसाय इति तथा धर्म्मादनपेतं ध्यानं धर्म्मध्यानमिति च ज्ञेयं। तच्च बाह्याध्यात्मिकभेदेन द्विविधं। तत्र सूत्रार्थमार्गणशीलगुणादिष्वनुरागिता बाह्यं। आध्यात्मिकमपि अपायविचयादिभेदेन दशविधं। तत्र संसारहेतूनां प्रवृत्तीनां कथं वर्ज्जनं स्यादिति चिन्ताप्रबन्धसम्बन्धः अपायविचयं नाम प्रथमं। पुण्यानां प्रवृत्तीनामात्मसात्करणार्थं संकल्पसन्ततिरुपायविचयं नाम द्वितीयं। जीवानामनादिनिधनत्वोपयोग-लक्षणत्वादिचिन्तनं जीवविचयं नाम तृतीयं। तथा स्याद्वादप्रक्रियावलम्बनेन तर्कानुसारिणः पुंसः सन्मार्गाश्रयणं हेतुविचयमिति क्रमेण अजीवविचय-विपाकविचय-विरागविचय-भावविचय-संस्थानविचय-आज्ञाविचयानां स्वरूपकथनं। अथ शुक्लध्यानञ्च शुक्लं, परमशुक्लञ्चेति द्विविधं। तत्र प्रथमं तावत् यत्र अर्थादिषु वितर्कस्य पृथक्त्वेन वीचारोऽस्ति तल्लक्षणं। वीचारश्च अर्थव्यञ्जनयोगानां क्रमेण संक्रमः। तत्रार्थो ध्येयो व्यञ्जनं शब्दो योगश्च वागादिलक्षण इति निरूपणं। तदनेन ध्यानेन अविच्छिन्नमानसो मुनिः मोहस्योपशमं कुर्व्वन् द्रव्याणुमेकमेवावलम्ब्य द्रव्याद् द्रव्यान्तरं याति। द्वितीयन्तु यत्र वीचारहीनेषु अर्थादिषु एकत्वेन वितर्कोऽस्ति तल्लक्षणं। तदनेन परमशुक्लध्यानेन योगी ज्ञानदर्शनसम्यक्त्ववीर्य्यचारित्रपूर्व्वकैः भावैः सकर्म्मक्षयेण अनन्तसुखावहं मोक्षं प्राप्नोतीति निरूपणं। अथ नेमिजिनः षट्पञ्चाशदहोरात्रकालं यावत् तपस्यां कृत्वा शुक्लध्यानाग्निना घातिकर्म्मसञ्चयनं दग्ध्वा च जैनकैवल्यं प्रापेति विवरणकीर्त्तनं।

५७ सर्ग,—जिनानां समवसरणभूमिवर्णनं। तत्र भूमिनिरूपणं। उद्यान-सरोवरगृहादिनिरूपणञ्च। अथ वरदत्ताभिधानेन गणिना पृष्टस्य जिनदेवस्य तस्मै उपदेशप्रदानविवरणं। तत्र भगवतो वाणी एका दिव्यस्वरा बभूव। तथा हि,—एकात्मस्वरूपकथनात् तद्वाणी एकरूपा। एवं द्विधर्म्मकथनात् द्विरूपा। रत्नत्रयप्रकाशनात् त्रिरूपा। चतुःकषायनाशनात् चतूरूपा। पञ्चास्तिकायप्ररूपकत्वात् पञ्चरूपा। षड्द्रव्यप्रकाशकत्वात् षड्रूपा। सप्तभङ्गीप्ररूपणात् सप्तरूपा। कर्म्मसुनाशनात् अष्टरूपा। नवनयप्ररूपणात् नवरूपा चेति। अथ जगतो भावाभावरूपत्वकथनं निर्व्विकल्पभावत्वकथनं। अहेतुत्वकथनं। नन्वमादेः क्षित्यादिकार्य्यपरम्परायाः कर्त्तृत्वेन सहेतुकत्वसिद्धिः तथाहि क्षित्यादिकं सकर्त्तृकं कार्य्यत्वाद् घटवदिति तदप्यसमीचीनं कार्य्यत्वस्य असिद्धेरिति। अनादित्वकथनं। अपरिणामित्वकथनञ्च। आत्मपरलोकधर्म्माधर्म्मादीनामस्तित्वकथनं। आत्मनश्च कर्त्तृत्वभोक्तृत्वादिकीर्त्तनञ्च। तथा आत्मनः अस्तिनास्तीतिषट्प्रकारप्रदर्शनं अथ आत्मनः अविद्यया संसारबन्धः, विद्यया च तस्माद्विमुक्तिरिति कथनं। किञ्च सम्यग्दर्शनज्ञानचारित्रत्रितयस्यैव विद्योत्पादनेन मोक्षहेतुत्वनिरूपणञ्च। जीव-अजीव-आस्रव-बन्ध-सम्वर-निर्ज्जर-मोक्षरूपसप्ततत्त्वकथनं। अथ ज्ञानेच्छाद्वेष-प्रयत्नसुखदु-खादीनामात्मलिङ्गत्वकथनं। अथ पृथिव्यादिभूतानां संस्थानविशेषोऽयं जीवः तथा पिष्टकिण्वादिभ्यो मदशक्तिवत् चैतन्यमुत्पद्यते—

इति चेन्न शरीरस्य चैतन्यव्यभिचारित्वादित्यनेन चार्व्वाकमतखण्डनं । नापि संवित् स्वयमात्मा- तथा हि—क्षणिकात्मनि संविदो प्रत्यभिज्ञानव्यवहारविलोपः स्यादिति क्षणिकविज्ञानवाद- खण्डनं । तथायमात्मा नाणुमात्रको नापि अङ्गुष्ठादिपरिमाणकः, तथात्वे सकलैः प्रदेशैः सर्व्व अङ्गुरादिवत् न स्वार्थं प्रतिपद्येत । अथासौ विभुरपि भवितुं नार्हति ; यतस्तस्य तथात्वे ज्ञानस्यार्थे दूरनिकटादिव्यवहाराय जलाञ्जलिर्दीयतां । अत एव देहमात्रपरिमाणोऽयमात्मेति सूक्तं । किञ्च समस्तपदार्थेषु संक्षेपतो जीवाजीवाख्ये द्वे तत्त्वे तत्र बोधात्मको जीवः, अबोधा- त्मकस्त्वजीवः । तत्र अजीवस्य आकाशधर्म्माधर्म्मपुद्गलकालास्तिकायभेदेन पञ्चविधत्वं । अस्ति- कायश्च,—पञ्चसु तत्त्वेषु कालत्रयसम्बन्धितया अस्तिव्यपदेशः, शरीरवदनेकप्रदेशत्वेन कायव्यप- देश इति । अथ जीवा द्विविधाः संसारिणो मुक्ताश्च । संसारिणोऽपि द्विविधाः समनस्का अमन- स्काश्च । तत्र शिक्षाक्रियालापग्रहणरूपसंज्ञा येषामस्ति ते संज्ञिनः समनस्काः, एतद्विधुरास्त्व- मनस्काः । तत्र नयादिभिरुपायैः प्रतिपन्नोऽयं जीवः । अथ अनेकात्मनि द्रव्ये नियतैकात्म- ग्राही नय इत्युच्यते । अयं हि द्रव्यार्थिकपर्य्यायार्थिकभेदेन द्विविधः । तयोश्च नैगम-सङ्ग्रह- व्यवहार-ऋजुसूत्र-शब्द-समभिरूढाख्यया षड्विधत्वनिरूपणं । अथ पूरयन्ति गलन्तीति पुद्गलास्ते च द्विविधाः अणवः स्कन्धाश्च । अथ कायवाङ्मनसां कर्म्मयोग आस्रव इति कथ्यते, तथा हि— यथा, जलावगाहद्वारं नद्याः स्रवणकारणत्वादास्रव इति निगद्यते तथा योगप्रणालिकया कर्म्म आस्रवतीति स योग आस्रवः । स च सकषाय-अकषायभेदेन द्विधा । तत्र कषति हिनस्ति आत्मानं कुगतिप्रापणादिति कषायः । अथ सकषायत्वात् जीवः कर्म्मभावयोग्यपुद्गलानादत्ते—इत्यतः कर्म्मबन्धयोग्यानां सम्बन्धं यत्करोति ततः सम्बन्ध इति निगद्यते । अथ पुनरपि शुभाशुभभेदा- दास्रवो द्विविधः, तत्र अहिंसादिः शुभकाययोगः सत्यभाषणादिः शुभवाग्योग इत्यादिकं । अथ आस्रवयति पुरुषं विषयेष्विति इन्द्रियप्रवृत्तिरप्यास्रव इति चोच्यते । तत्र च साम्परायिकी-कायिकी- आध्यात्मिकी-प्रत्यायिकी-नैसर्गिकीभेदेन पञ्चविधक्रियानुप्रवेशकथनं । अथ ताः क्रिया अपि- प्रत्येकं पञ्चविधा इति मिलित्वा पञ्चविंशतिप्रकारक्रियालक्षणकीर्त्तनं । इति सामान्येन कर्म्मास्र- वाणां भेदप्रदर्शनपूर्व्वकं प्रत्येकं विशेषकार्य्यनिरूपणं । अथ पूर्व्वोक्ताहिंसासूनृतास्तेय-ब्रह्मचर्य्याप- रिग्रहरूपस्य महाणुव्रतसंज्ञाकथनं । अथ संसारकारणादात्मगोपनं गुप्तिः । सा च त्रिधा कायवाङ्- मनश्चभेदात् । गुप्त्याद्युपायसंवरव्रतसाधनेन मिथ्यादर्शनविरतिप्रमादकषायाणां बन्धहेतूनां निवृत्तिकामो व्रती इत्युच्यते । असौ सागार-अनागारभेदेन द्विविधः । अथ अहिंसाद्यनुव्रतस्य प्रत्येकं लक्षणकथनपूर्व्वकं तदन्वयस्य उत्कर्षव्रतनियमकथनं । अथ सम्यग्ज्ञानदर्शनचारित्राणां रत्नत्रयाणां प्राप्त्युपायकथनं । तत्र जीवादीनां यथावस्थं मोक्षसंशयादिराहित्येन अवगमं ज्ञानं । एतज्ज्ञानं पञ्चविधं मति-श्रुति-अवधि-मनःपर्य्याय-केवलभेदात् । संसरणकर्म्मोच्छि- त्त्युद्यतस्य श्रद्दधानस्य ज्ञानवतः पापगमनकारणनिवृत्तिः सम्यक्चारित्रं । तत्र अहिंसादिभेदेन पञ्चधा । येन रूपेण जीवाद्यर्था अवस्थितास्तेन रूपेण अर्हत्प्रतिपादिते, श्रद्धानं सम्यग्दर्शन-

मिति। अथ कषायनिमित्ततया प्रकृतिनिरूपणं। सा च अष्टविधा यथा,—ज्ञानावरण-दर्शनावरणवेदनीय-मोहनीय-आयुः-नाम-गोत्र-अन्तरायभेदेन। एतेषां लक्षणकथनपूर्व्वकमवान्तरभेदादिनिरूपणं। अथ गतिभेदनिरूपणं। मिथ्यादर्शनादिभेदनिरूपणं। त्रस-स्थावरनामभेदेन अमनस्कजीवस्य द्वैविध्यं तत्र द्वीन्द्रियादयश्चतुर्व्विधाः शङ्खगण्डोलकप्रभृतयस्त्रसाः। पृथिव्यादयः स्थावराः। एवं आतप-उद्योत-उच्छ्वास-शरीरसुभग-दुर्भग-सुस्वर-दुःस्वर शुभ-अशुभसूक्ष्मादिलक्षणकथनं। अथ पुण्यापुण्यप्रकृतीनां शुभाशुभानुभवनिरूपणादिकं। अथ अर्ज्जितस्य कर्म्मोऽनुभवात् तपस्यादिभिर्निर्ज्जरणं निर्ज्जरा। सा द्विविधा विपाकजा, अविपाकजा च। तत्र आम्रादिफलपाकवत् क्रमेण प्रारब्धफलकर्म्मनिवृत्तिः प्रथमा। तदितरा तु द्वितीया। अथ आस्रवस्रोतसोद्वारं संवृणोतीति सम्बरः। सोऽयं निरोधरूपी भावद्रव्यभेदेन द्विविधः। संसारहेतूनां कर्म्मणां निवृत्तिः भावसम्बरः। तत्कर्म्मपुद्गलानामादानविच्छेदो द्रव्यसम्बरः। अथ प्राणिपीडापरिहारेण सम्यगयनं समितिः। सा च पञ्चधा ईर्य्या-भाषा-एषणा-आदान-शोत्सर्गभेदेन। समिति-गुप्तिप्रभृतीनां सम्बरकारणतानिरूपणं। अथ कर्म्मणां निर्ज्जरातो बन्धहेतूनामभावात् कार्त्स्न्येन दुःखनिवृत्तिरपवर्ग इति निरूपणं। मोक्षकारणन्तु जीवादिसप्ततत्त्वानां ज्ञानपूर्व्वकं श्रद्धानं तथा चारित्रञ्चेति। एतच्छ्रुत्वा सर्व्वेषां तेषां यादवानां तत्कामिनीनाञ्च अणुव्रतग्रहणपूर्व्वकं निजालयगमनविवरणकथनं।

५९-६६, सर्गे,—अथ नेमिजिनस्य विहारनिर्म्माणपुरःसरं सुराष्ट्र-मत्स्य-लाट कुरु-जाङ्गल-पाञ्चाल-मागध-अङ्ग-वङ्गादिदेशेषु परिभ्रमणपूर्व्वकञ्च जैनधर्म्मप्रचारकथनं। कृष्णपूर्व्वजानां देवकीपुत्राणां नेमिजिनशिष्यतापाप्तिकथनं। नेमिजिनस्य सत्यभामारुक्मिणीप्रभृतीनां परतस्तासां पूर्व्वजन्मवृत्तान्तकीर्त्तनं। कृष्णेन सह नेमिजिनस्य संवादेन चक्रिणामर्द्धचक्रिणामर्हतां नामादिकथनं। तथाहि, वृषभनाथ-अभिनन्दननाथ-सुमति-पद्मप्रभ-सुपार्श्वनेमिप्रभृतीनां नाम। तथा भविष्यज्जिनेश्वरयोः पार्श्व-महावीरयोर्नामादिकथनं। एषां जन्मस्थानकथनं जन्मतिथिनक्षत्रादिकीर्त्तनञ्च। यथा प्रथमस्य वृषभनाथजिनस्य विदेहेषु, चैत्रकृष्णनवम्यामुत्तराषाढानक्षत्रे जन्म, अस्य पिता नाभिर्नाम, माता च मरुदेवी। तथा चास्य चैत्यवृक्षो न्यग्रोधपादपः, निर्व्वाणप्राप्तिस्थानञ्च कैलासपर्व्वत इति। क्रमेणानेन सर्व्वेषां जिनेन्द्राणां विवरणकीर्त्तनं। अथ जिनानां प्रत्येकं दीक्षाकालपारणाविधिकथनादिकं। तत्र आद्यस्य जिनस्य (वृषभस्य) वर्षैकेण पारण तदितरेषान्तु तृतीयदिवसे, तथा, वृषभस्य दीक्षाकालः चैत्रकृष्णनवमीत्यादिक्रमेण ज्ञेयं। किञ्च वृषभेण पारणायामिक्षुरसो गृहीतः, अन्यैस्तु गोक्षीरनिष्पन्नं परमान्नमङ्गीकृतं। अथ तेषां देहमान-परमायुःप्रभृतिकथनं। अपि जिनानां सप्तविधः पूर्व्वधराशिक्षक-आवधि-केवलि-वादि-विक्रियायुक्त-विपुलायुतभेदात्। तत्र पूर्व्वधराणां ४७५० संख्याकथनं। एवमन्येषां द्रष्टव्यं। एषामवान्तरभेदकथनपूर्व्वकं सङ्ख्याकथनं। तथा चैषां निर्व्वाणकालादिनिरूपणं। तत्र महावीरस्य निर्व्वाणकाले पालको नाम राजा भविष्यतीतिकथनं। अथ द्वैपायनस्य मुनेः कोपात् यदुवंशध्वंसवर्णनं

तत्र रामकृष्णाभ्यामन्तरेण सर्व्वेषां यादवानां पुरवासिनाञ्च द्वारकया सार्द्धं वह्निदाहेन विनाशप्राप्तिकथनं। पुरा किल नेमिजिनेन्द्रः कृष्णादिभिरभ्यर्थित एवमाह द्वैपायनमुनेः कोपेन सार्द्धं द्वारकया यदूनां दाहनं, तथा कृष्णस्यैव भ्राता जराकुमारः कृष्णस्य निधनं भविष्यतीति। तदेतत् श्रुत्वा नितरां निर्व्विष्णस्य जराकुमारस्य द्वारकापरित्यागपूर्व्वकं दक्षिणप्रदेशगमनकथनं। अथ यादवानां विनाशेन अत्यर्थं शोकसन्तप्तयोः रामकृष्णयोः दक्षिणमथुरामुद्दिश्य प्रयाणकथनं। तत्र वनमध्ये तरुच्छायायां शयानस्य कृष्णस्य जराकुमारनिक्षिप्तशरेण चरणवेधनादिकथनं। बलदेवविलापवर्णनं। जराकुमारमुखश्रुतकृष्णवृत्तान्तानां पाण्डवानां बलदेवसमीपगमनपूर्व्वकं कृष्णस्यौर्द्धदेहिकसम्पादनं। बलदेवस्य तपश्चरणं। पाण्डवादीनां प्रव्रज्यावृत्तान्तकथनं। तेषां निर्व्वाणप्राप्तिकथनञ्च। नेमिनिर्व्वाणकीर्त्तनञ्च।

---

**No. 2041.** **त्रिलोकसारः वा तिलोयसारो, सटीकः।** Substance, country-made paper, 10⅓ × 4¾ inches. Folia, 257. Lines, 9 on a page. Extent, 5,143 ślokas Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose and verse. Generally correct.

**Triloka-sára** ALIAS **Tiloya-sáro**. A description of the three regions of the Universe. The work is in Mágadhí verse, and extends to one thousand and nine stanzas. Attached to it is a Sanskrit commentary by Mádhavachandra Traividya, who says he has followed the opinion of Nemichandra Siddhántadeva, but it is not clearly stated whether this Nemichandra was the author of the text, or an earlier commentator. CONTENTS. Various kinds of regions, such as Bhavanas, Vyantara, Jyotih, Vimána, Nara, Tiryyak and Jina. Eternity of regions. Nihilism refuted. Agency of God in their creation refuted. Action of nature. Eternity of matter. Theory of illusion refuted. Theory of impermanence refuted. Regions compared to the evanescence of musical sounds. Extent equal to 14 *rajjus*. Extent of a rajju. Various kinds of measures. Various kinds of reckoning in relation to number, extension, solidity, expansion &c. These measures applied to practical purposes in measuring areas of land and water. The seven oceans relating to the earth. Regions of the earth. Distribution of heat and cold. Countries, their subdivisons &c. Hills. The river Vaitarani in the way to hell. The dwellers of hell. The number of Jina quarters. Countries in the 14 regions of the universe, their inhabitants. Asuras dwelling there,—other spiritual beings. The army of Hara. Characteristics of Asuras. Trees. Placing of images near

the root of sacred trees. Regions of Indra and others. The census of their inhabitants.

Description of Vyántara lokas. The number of Jaina temples therein Various kinds of kings who dwell therein—such as Kinnara, Kimpurasha, Mahoraga &c. Trees fit for Chaityas; these are Aśoka, Champaka, Nágakeśara, Tumbura, Vaṭa, Asvattha, Tulasí and Kadamba. Jambudvipa stands to the east of the Vyantara region.

Description of Jyotir loka. In this chapter are given accounts of the celestial luminaries, and casually of the 16 continents or great islands, Jambudvipa, Ghátaki-khaṇḍa-dvipa, &c. Sixteen other continents. Characters of the different oceans connected with the continents. Stars and planets, their distance from each other. Planets reckoned at 88, their names. The paths, motions, dimensions &c. of the sun and the moon. Night and day, their causes and those of their decrease and increase. Intercallary months. Equinoxes, and other details regarding the motions of the earth.

Description of Vimána loka, or the region of the Devas. Devas and Jaina worship there.

Sacred places in the Nara loka. This includes notices of a great number of sacred places on earth and their presiding divinities.

Characteristics of emperors and their belongings. Descriptions of various distinguished Jaina emperors of India.

Description of the salt ocean and its belongings, including various sacred places therein.

The Sanskrit contents given below will be found fuller and more detailed.

**Beginning.** बलगोविंदसिहामणि-किरणकलावरुणचरणणहकिरणं ।
विमलयरणेमिचंदं तिहुवणचंदं णमं सामि ॥ १ ॥
भवणव्वेंतरजोइस विमाणणरतिरिय लोयजिणभवणे ।
सव्वामरिन्द णरवइ संपूजियवन्दिए वंदे ॥ २ ॥
सर्व्वागासमनन्तं तस्सय बहुमज्झदेसभागम्मि ।
लोगो संखपदेसो जगसेढिघणप्पमाणोहु ॥ ३ ॥

टीकायाः । त्रिभुवनचन्द्रजिनेन्द्रं भक्त्यानत्य त्रिलोकसारस्य ।
इयमिरयं किञ्चिज्ज्ञ-प्रबोधनाय प्रकाश्यते विधिना ॥
जीयादकलङ्कादिः सूरिर्गुणभूरिरतुलतपधारी ।
अनवरतविनतजिनमतविरोधिवाजिनतो जयति ॥

यस्यादविन्दतबुधानां विश्वयत्नद्‌भूतप्रहतिरिव यस्य ।
मच्छाउमनपमुद्‌तादमर्थ. चमक्रुमतितिमिरनिवहमदः ॥

श्रीमदप्रतिहतप्रतिमभिःप्रतिपत्तिःकरणभगवन्नेमिचन्द्रसैद्धान्तदेवचतुरनुयोगचतुरुदधिपार-
ग्रामुण्डरायप्रतिबोधनव्याजेनाशेषविनेयजनप्रतिबोधनार्थं त्रिलोकसारनामानं ग्रन्थमारचयन्
दादौ निर्विघ्नतः शास्त्रपरिसमाप्त्यादिकं फलकुलमवलोक्य विशिष्टेष्टदेवतामभिष्टौति ।
ल्लगेविंद' इति । अपार्थो कथ्यते । णमंसामि नमस्यामि नमस्करोमि । कं, विमलयरणेमि-
चंदं विमलतरनेमिचन्द्रं । इत्यादि ।

End. इति णेमिचंदमुणिणा अप्पसुदेणभयणं दियच्छेण ।
रइयो तिलोयसारो खमं तु तं बहुसुदाइरिया ॥ १००९ ॥

टीकायाः। गुरुणेमिचंदसम्मद-कदिमयगाहा तहिं तहिं रइदा ।
माधवचंदतिविज्जे णिणमणुसरणिज्जमज्जभेहिं ॥

स्वकीयगुरुनेमिचन्द्रसिद्धान्तचक्रिणां सम्मताः । अथ वा ग्रन्थकर्तृणां नेमिचन्द्रसिद्धान्तिदेवा-
नामभिप्रायानुसारिण्यः कतिपयगाथाः । माधवचन्द्रत्रैविद्येनापि तत्र तत्र रचिताः । इदम-
शेषैराचार्यवर्यैरनुसरणीयं । साम्प्रतमलङ्कारकर्ताप्यन्त्यमङ्गलं कुर्वन्नभीष्टाशंसनं करोति ।

अरहन्तसिद्धआइरिय उवज्झायासाहुपचपरमेठी ।
इयपञ्चनमोक्कारो भवे भवे म सुहं दिंतु ॥

Colophon. इति श्रीनेमिचन्द्रसिद्धान्तिदेवानामभिप्रायानुसारिणा माधवचन्द्रत्रैविद्येन
रचिता त्रैलोक्यसारटीका इह समाप्ता ।

विषयः। ग्रन्थस्य भवनव्यन्तर-ज्योतिः-विमान-नरतिर्यक्लोक-जिनभवनरूपपञ्चाधिका-
रकथनं । लोकस्य अस्तित्वादिकथनं । तत्र शून्यवादनिराकरणं । ईश्वरकर्तृत्वनिराकरणं ।
स्वभावनिर्वृत्तत्वकथनं । परमाणुरव्यतानिराकरणं । मायावादनिराकरणं । क्षणिकमतनिरासः
लोकस्य (भुवनस्य) मुरजसन्निभत्वकथनं । तत्र चतुर्दशरज्जुमयकल्पनं । जगत्श्रेण्याः सप्तमो
भागो रज्जुरिति लक्षणकथनं । छन्दाङ्गुलादीनां मानानां प्रतिपत्तिकथनं । मानप्रक्रियाकथनं ।
तत्र लौकिकलोकोत्तरभेदेन द्विविधमानकथनं । तत्र मानोन्मानावमानगणिमानप्रतिमान तत्प्र-
तिमानभेदेन लौकिकमानस्य षड्विधत्वकथनं । द्रव्यक्षेत्रकालभावभेदेन लोकोत्तरमानस्य चतुर्वि-
धत्वकथनं । तत्र द्रव्यादीनां क्रमेण जघन्योत्कृष्टत्वकथनं । संख्याप्रमाणोपमाप्रमाण-भेदेन द्रव्यस्य
द्वैविध्यकथनं । संख्येयमसंख्येयमनन्तमिति संख्यापि त्रिविधा । तत्र असंख्येयमनन्तञ्च प्रत्येकं त्रि-
विधं परीतं युक्तं द्विकवारमिति । अथ संख्येयज्ञाननिमित्तं, अनवस्था, शलाका, प्रतिशलाका,
महाशलाकेति चत्वारि कुण्डानि कल्पयितव्यानि । तत्र चतुर्णां कुण्डानां व्यासादिपरिमाणकथनं
क्षेत्रफलज्ञानोपायकथनं । तत्र क्षेत्रसंख्यामादिकीर्णनञ्च । कुण्डानां शतभिक्षादिफलानयनादि-
प्रकारकथनं । क्रमेणानेन सप्रभेदासंख्येयानन्तयोः स्वरूपकथनं । एवं विषयज्ञानमिरूपणं । तत्र

सर्व्वधारानिरूपणं। समधाराकथनं। विषमधाराकथनं। एतयोः स्थानानयनादिप्रकारकथनं। एवं परत्र ज्ञेयं। तथा कृतिधाराकथनं। अकृतिधाराकथनं। घनधाराकथनं। वर्गमातृकाधाराकथनं। घनमातृकाधारा। द्विरूपवर्गधाराकथनं। क्रमेणानेन चतुर्दशविधधारानिरूपणं। संख्याप्रमाणप्रपञ्चनञ्च इतमितिज्ञेयं। अधुना पूर्व्वोक्तस्य उपमाप्रमाणस्य अष्टविधत्वनिरूपणं। यथा,—पल्यं, सागरः, सूच्यङ्गुलं, प्रतराङ्गुलं घनाङ्गुलं, जगत्श्रेणिः, जगत्प्रतरः, घनलोकश्चेति। तत्र व्यवहारोद्धाराद्धापल्यानीतिपल्यत्रयेण क्रमेण संख्याद्वीपसमुद्राः कर्म्मस्थित्यादयश्च वर्णिताः। पल्यप्रमाणोपायकथनं। अत्र क्षेत्रसंस्थानादिकथनं। एवं सागरोपमसूच्यङ्गुलोपमादीनां स्वरूपनिरूपणं। पूर्व्वोक्तचतुर्द्दशरज्जुपर्य्यन्तं लोकस्य आयामकथनं। रज्जुफलादिनिरूपणं। अधोलोके क्षेत्रफलानयनाय तस्य अष्टधाप्रभेदकथनं। यथा,—सामान्यं, ऊर्द्धायतं, तिर्य्यगायतं, यवमुरजं यवमध्यं, मन्दरं, दूष्यं, गिरिकटकञ्च। क्रमेणैषां क्षेत्रफलादिनिरूपणं। लोकशिखरे वायुवाहुल्यकथनं। वायुक्षेत्रफलादिकथनं। इक्षो सार इव लोकमध्ये त्रसनाडीस्वरूपकथनं। त्रसनाड्यधःस्थभूमिभेदकथनं। तत्र मुरजदले सप्तमह्यः, तथा,—रत्नशर्करा, वालुकाः, पङ्कं, धूमः, तमः, महातमः, प्रभा चेति। तत्र पृथिव्यादीनां भेदादिनिरूपणं। शीतोष्णादिविभागकथनञ्च। दिग्विभागकथनं। नरकादिसंख्यादिनिरूपणं। विस्तरेण नरकवर्णनं। वैतरणीनदीवर्णनं। नरकान्निःसृतस्य जीवस्य उत्पत्तिनियमकथनं तत्र प्रथमं तिर्य्यग्योनौ उत्पत्तिकथनं। नरकं गच्छतां जीवानां पृथिवीं प्रति नियमकथनं। अथ पूर्व्वोक्तभवनेषु सप्तकोटिद्वासप्ततिलक्षसंख्यकानि जिनभवनानि सन्तीतिकथनं। भवनवासिनां कुलभेदकथनं। तत्र असुरादिगणकथनं। भूतानन्दादिगणकथनं। हरिषेणादिगणकथनं। क्रमेणासुरादीनां चिह्नकथनं। यथा,—चूडामणि-फणि-गरुड़-गज-मकरस्वस्तिक-वज्र-सिंह-कलस-अश्वाश्च। अश्वत्थ-सप्तच्छद-शाल्मली जम्बू-वेतस-कदम्ब प्रियङ्गु-शिरीष-पलाश-राजद्रुमरूपचैत्यतरुकथनं। चैत्यतरूणां मूलदेशे प्रतिमास्थापनार्थं स्तम्भादिनिर्म्माणप्रकारकथनं। इन्द्रादीनां भवनसंख्यादिकथनं। अनीकभेदकथनं। तत्र नृत्यानीकादिसंख्याकथनं। तत्र भवनेषु असुरादिदेवीनां संख्याकथनं। तथाहि,—महादेव्यः ५, परिवारदेव्यः ५,२९९९५, वल्लभिकाः, ३२०००, अभ्यिन्तरयाः ५६०००, विकुर्व्वाणादेव्यः पृथगेव ४०००० । तथा अनीकवाहनादिसंख्यादिकथनञ्च ।

एवं भवनलोकनिरूपणानन्तरं व्यन्तरलोकनिरूपणं। तत्र,—जिनगेहसंख्यादिकथनञ्च। व्यन्तराणां कुलभेदनिरूपणं। अथ किन्नर-किंपुरुष-महोरग-गन्धर्व्व-यक्ष-राक्षस-भूत-पिशाचरूपाष्टविधव्यन्तरदेवताकथनं। तेषां वर्णादिनिरूपणञ्च। चैत्यतरुभेदकथनं। यथा,—अशोक-चम्पक-नागकेशर-तुम्बुरु-वट-अश्वत्थ-कण्टकतरु-तुलसी-कदम्बवृक्षाश्च। अथ वृक्षमूलेषु जिनप्रतिमास्थापनार्थं स्तम्भादिनिर्म्माणविधिकथनं। किन्नरादीनां (प्रिया) वल्लभिकानिरूपणं। तेषां सेनान्तरनिरूपणञ्च। व्यन्तरलोकस्य पूर्व्वस्यां दिशि जम्बूद्वीपतुल्यानि पञ्चपञ्चनगराणि सन्तीति कथनपूर्व्वकं तदुपरि महाप्रासादस्वरूपकथनं। तन्नगरवास्यवनवर्णनादिकं। भवनादिवर्णनञ्च।

अथ ज्योतिर्लोकस्वरूपनिरूपणं। तत्र जिनगेहसंख्यादिकथनं। चन्द्र-आदित्य-ग्रह-नक्षत्र-प्रकीर्णकताराभेदात् पञ्चविधज्योतिष्कभेदकथनं। एतत्कथनमुखेन षोडशद्वीपनिरूपणं यथा,—जम्बूद्वीपः, धातकीखण्डद्वीपः, पुष्करवरः, वारुणिवरः, क्षीरवरः, घृतवरः, क्षौद्रवरः, नन्दीश्वरवरः, अरुणवरः, अरुणाभासवरः, कुण्डलवरः, शङ्खवरः, रुचकवरः, भुजगवरः, कुशगवरः, क्रौञ्चवरश्चेति।

अन्यविधषोडशद्वीपकथनं यथा,—मनःशिलाद्वीपः, हरितालद्वीपः, सिन्दूरवरः, श्यामवरः, अञ्जनकवरः, हिङ्गुलिकवरः, रूप्यवरः, सुवर्णवरः, वज्रवरः, वैडूर्य्यवरः, नागवरः, भूतवरः, यक्षवरः, देववरः, अहीन्द्रवरः, स्वयम्भूरमणश्चेति। तत्र लवणाम्बुधिः, कालोदकाम्बुधिश्चेतिकथनपूर्व्वकं पूर्व्वोक्तद्वीपनामभिः प्रत्येकं समुद्रनामकथनञ्च। जम्बुद्वीपादीनां प्रत्येकं विस्तारसंस्थानादिकथनं। समुद्रेषु प्रत्येकं रसविशेषकथनं। तत्र लवणसमुद्रे, कालोदकसमुद्रे, स्वयम्भूरमणसमुद्रे च जलचराः सन्ति नान्यत्रेतिकथनं। मनुष्यतेतरविभागस्य कर्म्मभोगभूमिविभागस्य च पर्य्यन्तपर्व्वतद्वयनिरूपणं। ताराणां स्थितिस्थानादिनिरूपणं। चन्द्रादीनां स्थितिस्थानादिनिरूपणं। ज्योतिर्विमानस्वरूपकथनं। ग्रहादीनां व्यासादिनिरूपणं। तेषां किरणप्रमाणनिरूपणं। चन्द्रादीनां विमानवाहकानां रूपादिकथनं। केषाञ्चिन्नक्षत्राणां दिग्विभागकथनं। चलाचलनक्षत्रनिरूपणं। ग्रहाणामवस्थानक्रमकथनं। विम्बाद्यानयनप्रकारकथनं। पूर्व्वोक्तरज्जुक्षेत्रप्रमाणादिकथनं। अल्पसन्दृष्टिप्रक्रियाकथनं। ज्योतिर्विम्बसंख्याद्यानयनादिप्रकारकथनं। चन्द्रस्य परिवारकथनं। अष्टाशीतिग्रहाणां नामानि यथा,—काल-विकाल-लोहित-कनक-कनकसंस्थान-अन्तरद-दुन्दुभि-रत्ननिभ-रूपनिर्भासप्रभृतयः। सूर्य्याचन्द्रयोरन्तरस्थानोपायकथनं। तयोः वीथीनिरूपणादिकं। चन्द्रादीनां परिध्यानयनप्रक्रियाकथनं। दिनरात्रिहेतुकथनं। तयोः ह्रासवृद्धिकारणकथनं। अयनाद्यानयनप्रकारकथनं। सूर्य्याचन्द्रयोः गमनप्रकारकथनं। अस्तोदयानयनप्रकारकथनं। चापानयनप्रक्रियाकथनं। समुद्रचारक्षेत्रनिरूपणञ्च। वेदिकाक्षेत्रफलादिकथनं। द्वीपचारकथनं। चन्द्रादिपथव्यासप्रमाणादिकथनं। सूर्य्यतापस्य क्षेत्रविभागप्रक्रियाकथनं। चन्द्रादित्यग्रहाणां परिधिभ्रमणकालानयनप्रकारकथनं। चन्द्रादित्ययोर्नक्षत्रभुक्तिकालानयनप्रकारकथनं। राह्वोः नक्षत्रभुक्तिनिरूपणं। मलमासप्रकारप्रतिपादनं। दक्षिणोत्तरायणप्रारम्भे नक्षत्रायणप्रकारकथनं। विषुवे पञ्चमनक्षत्रादीनामानयनप्रकारकथनं। ताराणामाकारविशेषकथनं। कृत्तिकादीनां परिवारताराकथनं। तत्संख्या तु एकादशोत्तरशताधिकसहस्र (११११) मितिकथनञ्च।

अथ विमानलोकनिरूपणं। तत्र च त्रयोविंशतिसहितचतुरशीतिलक्षसप्तनवतिसहस्रसंख्यामितजिनभवनकथनं। द्वादशकल्पानां नामकथनं। तत्र नामानि यथा,—सौधर्म्म ऐशान-सनत्कुमार-माहेन्द्रप्रभृतीनि। कल्पातीतविमानसंख्याकथनं। इन्द्रकसंख्याकथनं। अर्च्चिरर्च्चिमालिनी-वैरा-वैरोचनाख्यानि चत्वारि विमानानि दिग्गतानि, सोमरूपाङ्कस्फटिकाख्यानि चत्वारि

त्रिषष्टितानि, इत्यादिना विमानानां नामविभागादिकथनं। विमानानां स्थाननिरूपणं। प्रत्येकमिन्द्रकसंख्याकथनञ्च। तत्र नामानि यथा,—ऋतु-विमल-चन्द्र-वल्गु-वीर-अरुण-नन्दन-नलिन-काञ्चन-रोहितप्रभृतीनि। इन्द्रकाणां विस्तारादिकथनं। विमानानां वर्णकथनं। अथ सौधर्म्मादिद्वादशकल्पेषु देवानां मौलिचिह्नानि यथा,—वराह-मृग-महिष-मत्स्य-कूर्म्म-दर्दुर-तुरग-कुञ्जरप्रभृतीनि। इन्द्रकस्थितनगरवर्णनादिकं। तत्र सेनामुख्यनिरूपणं। परिषत्संख्यानिरूपणं। नगरान्तरालस्थदेवतादिकथनं। तत्र सुरपुरात् बहिः पूर्व्वादिषु दिक्षु अशोकसप्तच्छद-चम्पकादिवनचतुष्ककथनञ्च। तद्वनमध्यस्थचैत्यवृक्षस्वरूपादिकथनं। लोकपालानां नगरनिरूपणं। सौधर्म्मादिस्वर्गस्थितानां पद्मगन्धा-अलम्बुषाप्रभृतीनां गणिकानां नामादिकथनं। अथ देवीनां सपरिवारदेवीनाञ्च गृहादिनिरूपणं। देवीनां नामानि यथा,—शची-पद्मा-शिवा-श्यामा-कालिन्दी सुलसाप्रभृतीनि। तत्र शच्याद्यष्टमहादेवीनां विक्रियावल्लभिकादिदेवीसंख्यादिकथनं। इन्द्रस्य प्रासादादिस्वरूपकथनं। विशेषेण सुधर्म्माख्यसभावर्णनं। तत्र वरजिनगेहे सुराणां तीर्थंकरभूषणपूजादिकथनं। वैमानिकदेवानां जननमरणान्तरकथनं। अथ लौकान्तिकानामवस्थाननिरूपणमुखेन ब्रह्मलोकस्यान्ते अष्टकुला लौकान्तिकाः सुरा निवसन्तीतिनिरूपणं। सामान्येन देवानां शरीरोत्सेधोच्छ्वासाहारकालादिनिरूपणं। मिथ्यादृष्टिसम्यग्दृष्टेः फलकथनं एकदण्डित्रिदण्डिप्रभृतीनां परिव्राजकानां गत्यादिनिरूपणं। देवानामुत्पत्तिस्वरूपकथनादिकं। तेषां जिनपूजारूपसत्कार्यनिरूपणं। अथ अष्टमभूमिस्थितसिद्धक्षेत्रस्वरूपकथनञ्च।

अथ नरलोके द्विहीनचतुःशतजिनगृहकथनं। तिर्य्यक्लोके च द्वापञ्चाशत्संख्यकजिनभवनकीर्त्तनं। मन्दर-कुलपर्व्वत-मानुषोत्तरप्रभृत्यष्टस्थानेषु जिनगृहस्थानकथनं। जम्बूद्वीपे वाणाकार-मन्दरपर्व्वतस्वरूपादिकथनं। तत्र हैमवत-हरि-विदेहरम्यक-हैरण्यवत-ऐरावतरूपवर्षकथनं। तथा हिमवान्, महाहिमवान्, निषधः, नीलः, रुक्मी, शिखरी चेति षट्कुलपर्व्वता इति निरूपणञ्च। पर्व्वतानां प्रत्येकं वर्णकथनं। हिमवदादिषु स्थितानां ह्रदानां नामानि यथा,—पद्मः महापद्मः, तिगिञ्छः, केसरिः, महापुण्डरीकः, पुण्डरीकश्चेति। तत्र जातकमलानां विशेषरूपकथनं। तथाहि,—गन्धामोदितदिक्चक्रं वैडूर्य्यनालं, एकादशोत्तरसहस्रदलं, पृथ्वीसाररूपकमलमिति। तस्य मृणालस्य त्रिक्रोशपरिमाणादिकथनं। तत्कमलकर्णिकामध्ये श्रीदेवताया रत्नमयगृहकथनं। तन्निवासिनीनां देवीनां नामानि यथा,—श्रीः, ह्रीः, धृतिः, कीर्त्तिः बुद्धिः, लक्ष्मीश्चेति। अथ परिवारकमलस्थितश्रीदेवतापरिवारसंख्यादिकथनं। उक्तसरोवरजातनदीनां नामानि यथा,—गङ्गा, सिन्धुः, रोहिता, तापी, तोदा, नारी नरकान्ता, सुवर्णकूला, रूप्यकूला, रक्ता, रक्तोदा चेति। तत्र गङ्गायाः गमनमार्ग-निरूपणादिकं गोमुखीनिर्माणकारणकथनं। एवं सिन्धु-रोहितादीनां नदीनां गमनमार्गनिरूपणमुखेन वासनाकथनं। भारतादिवर्षाणां विष्कम्भादिनिरूपणं। भद्रशालादिवनपरिमाणकथनं। भूवासाद्यानयनादिप्रकारकथनं। मेरुनिरूपणं। नन्दनादिषु गिरिषु स्थितानां भवनानां नामादिकथनं। तत्र सोम-यम

वरुण-कुवेराणां भवनाधिपत्वकथनञ्च । सोमादीनामायुरादिनिरूपणं । नन्दन-मन्दर-निषध-हिमवत्-रजत-रुचक-सागर-वज्राख्यगिरिकूटानां नामधेयकथनं । नन्दनगिरिस्थवापीस्वरूपादिकथनं । तन्मध्यप्रासादस्वरूपकथनं । मेरुशिखरस्थितानां शिलातलानां नाम-स्थानादिकीर्त्तनं । तत्र जिनस्य भद्रासनादिनिरूपणं । अथ उत्तरकुरुप्रदेशे नीलगिरेः समीपे सीतानद्याः पूर्व्वतटे मन्दराचलस्य ऐशान्यां दिशि शतयोजनव्यासा जम्बूवृक्षस्थली तिष्ठतीतिनिरूपणं । तत्र स्थल्यां अम्बुजवेदिका द्वादश तिष्ठन्तीतिकथनं । परिवारवृक्षादिकथनं । विशेषेण जम्बूवृक्षवर्णनं ।

थ सीतोदापरतीरे निषधगिरिसमीपे देवकुरुक्षेत्रे मनोहररूप्यस्थले शाल्मलिवृक्षस्तिष्ठतीति-द्वर्णनं । भोगभूमिकर्म्मभूम्योर्विभागकथनं यथा,—देवकुरूत्तरक्षेत्रे द्वे उत्तमभोगभूमी, हरिरम्य-क्षेत्रे द्वे मध्यमभोगभूमी, हैमवत-हैरण्यवतक्षेत्रे द्वे जघन्यभोगभूमी स्यातामिति शिष्टानि सर्व्वाणि र्म्मभूमयश्चेति निरूपणं । अथ यमकगिरिस्वरूपकथनं । मेरोः चतुर्दिक्षु स्थितानां ह्रदानां रिमाणादिकथनं । चित्रगिरिकुलपर्व्वतादिवर्णनं । अष्टदिग्गजपर्व्वतवर्णनं । गजदन्तपर्व्वतानां ामादिकथनं । विदेहदेशविभागादिकथनं तत्र वक्षारपर्व्वतारण्यादिनिरूपणं । ग्राम-नगर-खेट-र्व्वट-मण्डप-पत्तन-द्रोण-सम्बाह-दुर्गादिसंख्याकथनं । तत्रत्योपसागरस्थितद्वीपादिवर्णनञ्च । देहदेशे ऋतूनां यथाकालोदयेन निरीतिभावत्वकथनं ।

अथ राजाधिराजादीनां लक्षणकथनं । तत्र सेनापतिगणकपति-वणिक्पति-अमात्य-पुरो-ताद्यष्टादशश्रेणीनामधिपो राजा, पञ्चशतराजस्वामी अधिराजः, सहस्रराजस्वामी महाराज यभिधीयते —इत्यादिनिरूपणं । तीर्थकरलक्षणं । वत्सा-सुवत्सा-रम्या-सुरम्या-पद्मासुपद्मा मङ्गला-लिन्यादिविदेहस्थदेशानां नामकथनं । तत्रस्थानां नद्यादीनां निर्गमस्थानादिनिरूपणं । अथ देहस्य प्रथमविजयार्द्धे पञ्चपञ्चाशन्नगराणि सन्तीति तेषां नामकथनं । ततो विजयार्द्धकृतषट् ण्डस्थम्लेच्छखण्डमध्यस्थितवृषभगिरिस्वरूपकथनं । तत्रत्यनगरादिवर्णनञ्च । अथ नाभिगिरी-ामस्थितस्य नामादिनिरूपणं । हिमालयादीनां कूटगिरिसंख्यानामादिकथनं । अथ भरतैरावत-भृतिहरिरम्यकक्षेत्रपर्य्यन्तं सर्व्वासां नदीनां संख्या लक्षत्रयं द्विनवतिसहस्राणि द्वादश च (३९२० २) ज्ञातव्यमितिनिरूपणं मेर्व्वादीनां व्यासानयनप्रकारकथनं । कुरुक्षेत्रादिक्षेत्राणां विष्कम्भा-ानयनप्रकारकथनं ।

अथ भरतेषु ऐरावतेषु च वर्षेषु अवसर्पिणी, उत्सर्पिणी चेतिकालद्वयं वर्त्तते । ताभ्याञ्च तत्र-जीवानां यथासंख्यं हानिवृद्धीभवत इति कथनं । तत्र कालद्वयस्य प्रत्येकं षड्भेदनिरूपणं । ा,—सुषमसुषमः. सुषमः, सुषमदुःषमः, दुःषमः, दुःषमसुषमः, अतिदुःषमश्चेति । क्रमेण षट्कालानां ातिकालनिरूपणं । जीवानामायुःप्रमाणनिरूपणञ्च । एवं षट्सु कालेषु क्रमेण नराणामुत्सेध -आहार क्रमादिनिरूपणं । अथ भोगभूमेः स्वरूपकथनं । तत्र जातानामुत्पत्त्यादिविधानक-नं । कर्म्मभूमिप्रवेशक्रमकथनं । तत्र जातानां कुलकराभिधानानां मनूनां नामानि यथा,—मङ्कर-क्षेमन्धर-सीमङ्कर-सीमन्धर-विमलवाहनप्रभृतीनि । मनूनामन्योन्यमन्तरकालनिरूपणं

सर्व्व प्रथमं पञ्चमनवः, अपराधिनो हाकारेण दण्डयन्ति अपरे पञ्च मामाकारेणेत्यादिना मनूनां शासन-शिक्षाप्रणालीनिरूपणं। एवं तेषां वर्णकथनं कृत्यनिरूपणञ्च। अथ लौकिकशास्त्रं लोकव्यवहारो दयामूलो धर्मश्च आदिब्रह्मणा निर्म्मित इति कथनं। चतुर्थे काले (दुःषमे) चतुर्विंशतितीर्थङ्कराणामुत्पत्त्यादिकथनपूर्व्वकं पार्श्वजिनवर्द्धमानजिनयोरवबोधादिवर्णनं। जिनानामन्तरकालनिरूपणं। जिनधर्म्मोच्छित्तिकालनिरूपणं यथा,—पुष्पदन्तादारभ्य शान्तिनाथावसानेषु सप्तसु अन्तरेषु वक्तृश्रोतृचरिष्णूनामभावात् सद्धर्म्मो नास्तीतिवाचनाकथनं। अथ द्वादशचक्रिणां (जिनानां) नामानि यथा,—भरतः, सगरः, मघवान् सनत्कुमारः, शान्तिजिनः, कुन्थुजिनः, अरजिनः, सुभौमः, महापद्मः, हरिषेणः, जयः, ब्रह्मदत्तश्चेति। एषां स्थितिकालादिनिरूपणं। काल-महाकाल-माणवक-पिङ्गल-नैसर्प्य पद्म-शङ्ख पाण्डु-नानारत्नाख्यरूपनवनिधिनिरूपणादिकं। सेनापति-गृहपति-स्थपतिप्रभृतिचतुर्दशरत्नकथनं। त्रिपृष्ठ-स्वयम्भू-पुरुषोत्तम-नारायण-कृष्णादीनामर्द्धचक्रिणां नामादिकथनं। एषां स्थितिकालनिरूपणं। तत्र कृष्णस्तु नेमीश्वरजिनस्य समये उत्पन्न इति कथनं। अर्द्धचक्रिणां प्राप्तगतिकथनं। तत्र कृष्णस्तृतीयां भूमिं प्रापेतिकथनञ्च। भीम-महाभीम-रुद्र-महारुद्र-प्रभृतिनवनारदकथनं। नारदानां कलहप्रियत्ववासुदेवसमकालत्वादिकथनञ्च, भीमावलि-सुप्रतिष्ठ-जितन्धरप्रभृत्येकादशरुद्रनामकथनपूर्व्वकं तेषां स्थितिकालादिनिरूपणं। अथ-पद्मप्रभ-वासुपूज्येन्द्रप्रभ-पुष्पदन्तादीनां तीर्थङ्कराणां वर्णकथनं, वंशकीर्त्तनञ्च। विक्रमाङ्क-कल्किनोः कालनिरूपणं। एवं विंशतिकल्किनामतिनामचरमकल्किस्वरूपकथनादिकं। तत्र धर्म्मादीनां विनाशकारणकथनं। प्रलयकाले सम्वर्त्तकानिलादीनामाविर्भावादिवर्णनञ्च।

अथ लवणार्णववर्णनं। तन्मध्यस्थितविजयपुरवर्णनञ्च। लवणार्णवान्तर्गतानां पातालानां वर्णनं। तत्र पूर्व्वस्यां दिशि स्थितानां वडवामुख-कदम्बक-पाताल-यूपकेसराभिधानानां तेषां परिमाणादिकथनं एवमन्यत्र स्थितानां ज्ञेयं। पातालान्तःस्थितयोः जलानिलयोः वर्णनं पूर्णिमादौ लवणसमुद्रे जलोच्छ्रायपरिमाणकथनं। द्वीपवर्णनादिकं। कालोदकसमुद्रवर्णनादिकं धातकीखण्डपुष्करद्वीपादिवर्णनं। मानुषोत्तरसमुद्रवर्णनं। दिक्कूटादिवर्णनं। तत्र पूर्व्वदिक्कूटे विजया, वैजयन्ती, जयन्ती, अपराजिता, नन्दानन्दवती, नन्दोत्तरा, नन्दसेनेति दिक्कुमारीकथनं। एवमन्यस्यां दिशि ज्ञेयं। द्वीपसमुद्रादीनामधीश्वरनिरूपणं। एवं वारुण-क्षीर-घृत-क्षौद्र-नन्दीश्वर-अरुणादिद्वीपसमुद्रेषु ज्ञातव्यं। विशेषेण नन्दीश्वरद्वीपवर्णनं। तत्रत्यजिनालयादिवर्णनञ्च। अथ त्रिलोकस्थितानामकृत्रिमाणां चैत्यालयानां सामान्येन व्यासादिनिरूपणं। तत्र जिनप्रतिमास्वरूपादिवर्णनञ्च।

**No. 2042.** आप्तमीमांसितं, आप्तमीमांसालङ्कृतिनामकवृत्तिसहितम्।

Substance, country-made paper, 8 × 4 inches. Folia, 219. Lines, 9, 12 on a page. Extent, 8,048 ślokas. Character, Nágara. Date, Sm. 1525. Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose and verse. Correct.

**Áptamímáñsita,** together with a commentary entitled *Áptamímáñsá-lañkriti.* A treatise on Jain philosophy, explaining the different dogmas, refuting heterodox theories, and giving a philosophical exposition of Jain duties. By Samantabhadra Yati. The commentary is by Vidyánanda.

**Beginning.** वृत्तिग्रन्थस्य। श्रीवर्द्धमानमभिवन्द्य समन्तभद्रमुद्भूतबोधमहिमानमनिन्द्यवाचं।
शास्त्रावतारचितस्तुतिगोचराप्त-मीमांसितं कृतिरलं क्रियते मयास्य ॥१॥
श्रेयः श्रीवर्द्धमानस्य परमजिनेश्वरसमुदयस्य समन्तभद्रस्य तद्‌मलवाचश्च संस्तवनमाप्तमीमांसि-
तस्यालङ्करणे तदाश्रयत्वात् तदन्यतमासम्भवे तदघटनात्। इत्यादि।

मूलग्रन्थस्य। देवागमनभोयानचामरादिविभूतयः।
मायाविष्वपि दृश्यन्ते नातस्त्वमसि नो महान्॥
अध्यात्मं वहिरप्येष विग्रहादिमहोदयः।
दिव्यः सत्यो दिवौकःस्वप्यस्ति रागादिमत्सु सः॥ इत्यादि।

**End.** मूलस्य। जयति जगति क्लेशावेशप्रपञ्चहिमांशुमान्
विहतविषमैकान्तध्वान्तप्रमाणनयांशुमान्।
यतिपतिरजो यस्याधृष्यान्मताम्बुनिधेर्लवान्
स्वमतमतयस्तीर्थ्या नानापरे समुपासते॥

वृत्तिग्रन्थस्य। येनाशेषकुनीतिवृत्तिसरितः प्रेक्षावतां शोषिता-
यद्वाचोऽप्यकलङ्कनीतिरुचिरास्तत्त्वार्थसार्थद्युतः।
स श्रीस्वामिसमन्तभद्रयतिभृद्भूयाद्विभुर्भानुमान
विद्यानन्दफलप्रदोऽनघधियां स्याद्वादमार्गाग्रणीः॥

**Colophon.** इत्याप्तमीमांसालङ्कृतौ दशमः परिच्छेदः।
श्रीमदकलङ्कशशधरकुलविद्यानन्दसम्भवा भूयात्।
गुरुमीमांसालङ्कृतिरष्टसहस्री सतामृद्ध्यै॥
श्रीमूलसङ्घमण्डलमणिः श्रीकुन्दकुन्दान्वये
श्रीदेशीगणगच्छपुस्तकभिधा (?) श्रीदेवसङ्घाग्रणीः।
श्लोकस्यापरार्द्धं नास्ति।

संवत् १५२५। वर्षे पौषसुदि ९। शुक्रवासरे। शुभं भवतु लेखकपाठकयोः॥

पुस्तके यादृशं दृष्टं तादृशं लिखितं मया।
यदि शुद्धमशुद्धं वा मम दोषो न दीयते॥
वृषभादीन् जिनान् वर्द्धमानान्तान् प्रणिपत्य वै।
अथ प्रशस्तपञ्चाशीयां प्रशस्तिं विदधे क्रमात्॥
उग्रकाख्ये पुरे श्रीमज्जिनमन्दिरसुन्दरे।
शकेन्द्रोऽवादीनाङ्के गवीं पाति स्वतेजसा॥
श्रीविक्रमनेमघाघाख्याब्दे पञ्चदशाव्दते।
वर्षाणां पञ्चविंशत्या नवम्यां कृष्णपौषके॥

विषयः। १ प्रथमपरिच्छेदे,—भगवतः स्तवनीयत्वकथनं। तथाहि भगवान् महानिति भवति तीर्थकरत्वात् विप्रत्वादिमन्तोदयत्वाच। यो महान् न भवति स तीर्थकरो न भवति, यथा-अस्मदादिः, तस्मात् तीर्थकरश्चासौ महान् भवतीति निरूपणं। अत्र प्रमाणसंप्लवादिसम्वादकथनं। सुगतकपिलादीनामाप्तत्वखण्डनपुरःसरं तीर्थकरस्य भगवत आप्तत्वव्यवस्थापनं।

अथ न कश्चित् पुरुषः सर्व्वज्ञः स्तुत्यः श्रेयोऽर्थिनां, श्रुतेरेव श्रेयःसाधनोपदेशसिद्धेरिति मीमांसकमतोपन्यासपूर्व्वकं तत्खण्डनं। अथ स्वर्गकामोऽश्वमेधेन यजेतेत्यादौ भावनैव वाक्यार्थ इति भाट्टाः। नियोग एव वाक्यार्थ इति प्राभाकराः। विधिरेव वाक्यार्थ इति वैदान्तिका इत्येषां मतोपपादनपुरःसरं परस्परं विप्रतिपत्तिप्रदर्शनं। अथ सौगतमतेन अन्यापोह एव शब्दार्थ इति निरूपणमुखेन तन्मतेन शब्दवादखण्डनं। तथाहि वस्तुस्वभावाभिधायकत्वाभावेन नियोगनिराकरणेऽपि विधेर्वाक्यार्थत्वघटनात् न भावना वाक्यार्थः सिद्धो भट्टस्येति न मनसि विधेयं। विधेरपि प्रमाणप्रमेयतदुभयरूपाद्यष्टविधविकल्पसङ्कुलतया बाध्यमानत्वात्। तथाहि प्रमाणं विधिरिति-कल्पनायां प्रमेयं किमपरं स्यात्, तत् स्वरूपमेवेति चेन्न सर्व्वथा निरंशस्य सन्मात्रदेहस्य विधेः प्रमाणप्रमेयरूपद्वयविरोधात्। कथमिदानीं उपनिषद्वाक्यं प्रतिभासमात्रादन्यत् कथं वा तत् परिकल्पिताद्वाक्यात् लिङ्गाद्वा परमार्थपथावतारिणः परब्रह्मणः प्रतिपत्तिः, तथात्वे परिकल्पिताग्न्यादेः पारमार्थिकपाचकादिप्रतिपत्तिः प्रसज्येत। अतएव कथमिदानीमन्यापोहः शब्दार्थ इति प्रतिषिध्यते। वस्तुस्वरूपाभिधायिनोऽपि शब्दस्य अन्यापोहमभिधायित्वे अन्यपरिहारेण क्वचित् प्रवृत्तिनिवृत्त्यनतापायाद्विधिरपि शब्दार्थो माभूदिति समुदितार्थः। अथ विधेःप्रवर्त्तकत्वनिरूपणं। तथाहि विधिः प्रवर्त्तकविधिः प्रवर्त्तकस्वभावो वा स्यादप्रवर्त्तकस्वभावो वा। आद्यश्चेत् वैदान्तिकानामिव सौगतादीनामपि प्रवर्त्तकः स्यात्। ननु तेषां विपर्य्ययात् न प्रवर्त्तक इति चेन्न, तत एव वैदान्तिकानामपि अप्रवर्त्तक इति वक्तुं शक्यते तदुभयोः समानाक्षेपसमाधानत्वात्। यदि पुनरप्रवर्त्तकस्वभाव एव विधिस्तदा कथं वाक्यार्थः स्यान्नियोगवत्। यथा,-विधिः वाक्यार्थो न अप्रवर्त्तकत्वात् नियोगवदित्यनया च दिशा विधेः फलरहितत्वादिकमूहनीयं। तदनेन प्रकारेण

आक्षेपप्रदर्शनादिपूर्व्वकं भावनैव वाक्यार्थ इति निष्कर्षकथनं। तथापि न परोदितो विधिर्वाक्यार्थः सिद्ध्यति, नियोगस्यैव वाक्यार्थत्वोपपत्तेः। अथ नियोग एव वाक्यार्थोऽस्त्वित्यपि न युक्तं तात्पर्य्यवशिनो नियोगस्य वाक्यार्थतया प्रतीत्यभावात् नियोगविध्यादिस्वरूपप्रतिपादके सर्व्वत्र वाक्ये भावनाया एव वाक्यार्थत्वप्रतीतेः सैव वाक्यार्थः। सा च द्विविधा शब्दभावना अर्थभावना च। एतत् स्वरूपादिविवेचनं। प्रवर्त्तकज्ञानविवेचनं। तत्र द्रव्यवादी सांख्यो भेदं संकल्पितं मन्यते, तथा पर्य्यायवादी बौद्धः अभेदं संकल्पितत्वेन मनुते। एवमुभयोस्तथात्वे वस्तुनः सर्व्वथापि अर्थक्रियाकारित्वं न घटते इति विवेचनं। तत्र च पुरुषाद्वैतवत् संवेदनाद्वैतस्य च निराकरणं। तथा सामान्यविशेषयोः वस्तुस्वरूपयोः सर्व्वथा ऐक्यमिति बौद्धमतनिराकरणं। अथ दृश्यानुपलब्धिरभावं साधयति। अदृश्यानुपलब्धिश्च संशयं साधयतीतिमतनिराकरणं। विज्ञानवादखण्डनं। इत्यनेन प्रकारेण बौद्ध-भट्ट-प्रभाकर-सांख्य-वैदान्तिकमतनिराकरणपूर्व्वकं सुगतादयः परस्परविरुद्धक्षणिकनित्याद्यनेकान्तमताभिधायिनः सर्व्वे न सर्व्वदर्शिन इति तथा श्रुतयोऽपि परस्परविरुद्धकार्य्यस्वरूपाद्यर्थाभिधायिन्यः सर्व्वा न प्रमाणभूता इति निरूपणं। किञ्च, कस्या अपि श्रुतेः प्रामाण्यं नास्तीतिनिर्णयः। प्रामाण्यवादः तत्र चार्व्वाकमतखण्डनपुरःसरं अनुमानादिप्रामाण्यसंस्थापनं, तत्त्वोपप्लववादिमतनिरसनं। अतत्त्वोपप्लववादिमीमांसकविशेषमतनिरसनं। प्राचीननैयायिकमतदूषणं। प्रामाण्यं स्वतोग्राह्यमितिमतखण्डनं। बौद्धमतखण्डनं। सांख्यमताक्षेपकीर्त्तनं। वैदान्तिकमतदूषणं। अभ्यासदशायां स्वतःप्रामाण्यमनभ्यासदशायान्तु परत एव गृह्यतः इत्यनेकेषां मतकथनं। अनेकान्तवादकथनं। अथ सुनिश्चितासम्भवद्बाधकप्रमाणत्वमिति स्याद्वादिनः स्वमतनिष्कर्षकीर्त्तनञ्च। तथा अनेकप्रमाणवादिनामपि कपिलकणभक्षाक्षपादप्रभाकरवैदान्तिकनैयायिकसौगतादीनामनिष्टतामपि प्रमाणान्तरतया मताक्षेपपुरःसरमुक्तस्य प्रमाणान्तरत्वसंस्थापनं। अथ यदसत् तत्र सुनिश्चितासम्भवद्बाधकप्रमाणं। यथा मरीचिकायां सलिलं सम्भवद्बाधकप्रमाणं। यथा च मेरुमूर्द्धनि मोदकं सन्दिग्धासम्भवद्बाधकं। सुनिश्चितासम्भवद्बाधकप्रमाणश्च सर्व्वज्ञ इत्यनेन प्रकारेण प्रकृते सर्व्वज्ञे सिद्धसाधनतानिरूपणं। चेतनस्य आत्मनोऽज्ञानावरणादिकर्म्म एव मदिरादिवत् मोहोदयकारणमितिनिरूपणं। अथ दोषो हि तावदज्ञानं ज्ञानावरणस्योदये जीवस्य स्यादितिनिरूपणं। विज्ञानवादखण्डनं। पृथिव्यादौ चेतनादिगुणस्य अभावोऽनुपलम्भान्यथानुपपत्तेरिति पृथ्व्यादिमयशरीरादात्मनः पृथक्त्वादिनिरूपणं। यस्मान्मणेः मलाकादेः व्यावृत्तिः अयः धतोऽत्यन्तविनाशानुपपत्तेः। तादृगात्मनोऽपि कर्म्मणां निवृत्तौ परिशुद्धिः। प्रध्वंसाभावो हि अयो हानिरिहाभिप्रेता सा च व्यावृत्तिरेव मणेरिति मलापनयनेऽपि नात्मनो हानिरेवेति निरूपणं। अभावखण्डनं। आत्मनि अज्ञानरूपमलस्य आगन्तुकत्वनिरूपणं। अत्र बौद्धादिमतनिरसनं। तथा संसारकारणं मिथ्यादर्शनादिकं, तन्निवर्त्तकञ्च सम्यग्दर्शनादिकमिति निर्णयः। आत्मनः ज्ञानादिगुणस्वभावत्वकथनेन दोषस्वभावत्वासिद्धेः दोषस्य कादाचित्कत्वादिकथनं। क्षणिकत्ववादनिराकरणं। अथ अर्हद्भगवान् निर्दोषो युक्तिशास्त्राविरोधिवचनत्वात्, तथा

भगवान् युक्तिशास्त्राविरोधिवचनो भवति तदभिमततत्त्वस्य प्रमाणेन अबाध्यमानत्वादित्यादिप्रकारेण तस्य निर्द्दोषत्वादिकीर्त्तनमुखेन अर्हन्नेव परमात्मेति निरूपणं। मोक्षसाधनप्रमाणकथनं। मोक्षस्वरूपविवेचनं। तथा हि बन्धहेत्वभावनिर्ज्जराभ्यां कृत्स्नकर्म्मविप्रमोक्षो मोक्ष इति निष्कर्षकथनं। पूर्व्वजन्मप्रेत्यभावादिनिरूपणमुखेन चार्व्वाकमतखण्डनं। ज्ञानज्ञेययोर्भेदनिरूपणप्रसङ्गेन योगाचारादिमतखण्डनं। भूतचेतनयोर्भिन्नलक्षणत्वनिरूपणं। देहादेरात्मनोऽतिरिक्तत्वव्यवस्थापनं। संसारस्य अनाद्यनन्तत्वादिवादखण्डनमुखेन मिथ्यादर्शनाविरतिप्रमादकषाययोगानां बन्धहेतुत्वकथनं। ज्ञानादीनामात्मस्वभावत्वकथनमुखेन सांख्यमतखण्डनं। व्याप्यव्यापकभावनिरूपणप्रसङ्गेन अविनाभावस्वरूपविवेचनं। व्याप्तिग्रहोपायादिकथनं। आत्मनोऽनर्थान्तरभूतानां सुखादीनां चेतनत्वव्यवस्थापनं। अत्र योगादिमतखण्डनं। रूपवेदनादिपञ्चस्कन्धवादिनां सौगतानां मतखण्डनं। प्रत्यक्षप्रमाणविवेचनं। न्यायावयवकथनं। धर्म्मकीर्त्तिमतानुसारेण निग्रहस्थानादिस्वरूपनिरूपणं। पुण्यपापनिरूपणं। अत्र शून्यवादादिखण्डनं। सत्त्वाद्वैतवादखण्डनं। भावैकान्तवादखण्डनं। वस्तुनानात्ववादव्यवस्थापनं। अद्वैतवादखण्डनं। प्रागभावादिवादव्यवस्थापनं। अत्र सौगतमतादिखण्डनं। नैयायिकस्वीकृतप्रागभाववादखण्डनं। शब्दप्रमाणविवेचनं। अत्र मीमांसकादिमतखण्डनं। शब्दानां अनित्यत्ववादव्यवस्थापनं। वर्णानामेकत्ववादखण्डनं। एकतत्त्ववादखण्डनं। द्रव्यादिसम्बन्धचतुष्टयसिद्धिनिरूपणं। मायोपमाः स्वप्नोपमाश्च सर्व्वे भावा इति सौगतमतखण्डनं। निर्विकल्पकदर्शनादौ स्वालक्षण्यवादखण्डनं। सप्तभङ्गीन्यायस्वरूपादिविवेचनं। तत्र अविनाभावादिसम्बन्धस्वरूपकथनं। अद्वैतवादखण्डनं। नित्यत्वैकान्तवादप्रतिक्षेपकीर्त्तनं। प्रत्यभिज्ञानस्वरूपविवेचनं। कार्य्यकारणस्वरूपनिरूपणादिकं। द्रव्यपर्य्याययोः नानात्वनिरूपणादिकं। स्वलक्षणत्वस्वरूपकथनं। प्रमाणाभासखण्डनं। संवेदनस्य जीवधर्म्मत्वनिरूपणं। जीवलक्षणादिकथनञ्च। परमाणुवादसंस्थापनं। दैवपुरुषकारयोरुभयोरेव मिलितयोः फलजनकत्वनिरूपणं। पुण्यपापभेदात् दैवस्य द्वैविध्यनिरूपणादिकं। तत्र पुण्यपापास्रवहेतुनिरूपणं। मिथ्यादर्शनाविरतिप्रमादकषाययोगानां बन्धहेतुत्वनिरूपणं। संक्लेशादिनिरूपणञ्च। जीवस्य गत्यागतिकथनं। ईश्वरस्य जगन्निमित्तकारणत्वादिवादखण्डनं। अतो धर्म्माधर्म्माभ्यामेव शरीरादिकार्य्यजननमितिनिरूपणं। केवलज्ञानप्राप्तानां चित्तदृष्टिकथनं। वस्तुतत्त्वस्य अनेकान्तत्वव्यवस्थापनं। सम्यग्दर्शनज्ञानचारित्ररूपमोक्षकारणकथनञ्च।

---

**No. 2043.** भगवतीवृत्तिः। Substance, country-made paper, 13½ × 5 inches. Folia, 217. Lines, 21 on a page. Extent, 18,144 ślokas. Character, Nágara. Date, Sm. 1399. Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Incorrect.

**Bhagavatí-vritti.** A Sanskrit commentary on the Bhagavatí Sútra, a Jaina work in Mágadhí on *Vivádha-prajnápti*—or unfailing knowledge—*i. e.*, knowledge leading to absolute emancipation. The codex comprises only the fifth or last book. Anonymous.

**Beginning.** सर्व्वज्ञमीश्वरमनन्तमसङ्गमग्र्यं सार्व्वीयमस्मरमनीशमनीहमिद्धमिद्धं ।
शिवं शिवकरं करणव्यपेतं श्रीमज्जिनं जितरिपुं प्रयतः प्रणौमि ॥ १ ॥
नत्वा श्रीवर्द्धमानाय श्रीमते च सुधर्म्मणे ।
सर्व्वानुयोगवृद्धेभ्यो वाण्यै सर्व्वविदस्तथा ॥ २ ॥
एतट्टीकाचूर्णी जीवाभिगमादिवृत्तिलेशांश्च ।
संयोज्य पञ्चमाङ्गं विवृणोमि विशेषतः किञ्चित् ॥ ३ ॥

**End.** पुस्तकलेखकक्षता नमस्काराः प्रकटार्थाश्चेति न व्याख्याताः ॥

**Colophon.** इति भगवतीविशेषवृत्तिः समाप्ता ॥

विषयः । भगवतीसूत्रपञ्चमाङ्गस्य व्याख्यानं ।

---

**No. 2044.** काव्यकौमुदी । Substance, country-made yellow paper, 14½ × 3 inches. Folia, 52. Lines, 5 on a page. Extent, 765 ślokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Incorrect.

**Kávya-kaumudí.** A concise treatise on rhetoric. Anonymous.

**Beginning.** नमस्तुङ्गशिरश्चुम्बिचन्द्रचामरचारवे ।
त्रैलोक्यनगरारम्भमूलस्तम्भाय शम्भवे ॥

**End.** तथा च दण्डी ॥ ते चाद्यापि विकल्पन्ते कस्तान् कार्त्स्न्येन वक्ष्यतीति ।

**Colophon.** इति काव्यकौमुद्यां शब्दार्थालङ्कारनिरूपणं तृतीयः परिच्छेदः ॥
इति काव्येष्वलङ्कार-गुणदोषप्रकाशिनी ।
आमोदयतु सर्व्वतःकुमुदं काव्यकौमुदी ॥

विषयः । अत्र काव्यस्वरूप गुण-दोषालङ्कृतीनां निरूपणं ॥

---

**No. 2045.** वैदिकलिङ्गार्थविवेचनम् । Substance, country-made paper, 12½ × 5¼ inches. Folia, 4. Lines, 11 on a page. Extent, 150 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Incorrect.

**Vaidika-liñartha-vivechana**. A disquisition on the use of the potential mood in the Vedas. The codex is incomplete, and the author's name cannot be made out.

**Beginning.** यत्कृपालेशमात्रेण पुरुषार्थचतुष्टयं ।
प्राप्यते नमस्तं वन्दे गोविन्दं भक्तवत्सलं ॥ १ ॥
अनन्तगुणसम्पन्नमनन्तभक्तप्रियं ।
अनन्तरूपिणं वन्दे गुरुमानन्दरूपिणं ॥ २ ॥
इह खलु परमकारुणिकेन भगवता जैमिनिमहर्षिणा अथातो धर्म्मजिज्ञासेत्यादिना द्वादशसु अध्यायेषु धर्म्मो विचारितः । तत्र वेदेन प्रयोगमुद्दिश्य विधीयमानोऽर्थो धर्म्मः । यथा यागादिः ।

**End.** भावार्थाधिकरणवासनावासितानां भवत्ये

**Colophon.** इतः परं खण्डितं ।

विषयः । यजेतेत्यत्र प्रत्ययगतलिङ्त्वांशेन पुरुषप्रवृत्त्यनुकूलव्यापाररूपायाः शाब्दीभावनायाः प्रतीयमानत्वमित्यादिविवेचनं ॥

---

**No. 2046.** शारीरकमीमांसाभाष्यविवरणं, वा प्रकटार्थः । Substance, country-made paper, 10¼ × 4 inches. Folia, 149. Lines, 15 on a page. Extent, 10,500 ślokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Correct.

**S'áríraka-mímáñsá-bháshya-vivarana** alias **Prakaṭártha.** A gloss on S'añkara's commentary on the Vedánta-sútra. Anonymous.

**Beginning.** सत्यं ज्ञानमनन्तं यत् कूटस्थं सुखविग्रहं ।
नित्यमुक्तं परं ब्रह्म भवामि तदहं सदा ॥
ज्ञात्वापि यस्य बहुकालमखिन्नमेन
व्याख्यातुमक्षमतया परितापिचेताः ।
तस्योपतापहरणाय मयेह भाष्ये
प्रारभ्यते विवरणं प्रकटार्थमेतं ॥

**End.** शुद्धं ब्रह्माख्यं नित्यमक्षरं परमं पदं ।
तिष्ठामि क क गच्छामि जगद्व्यापूरितं मया ॥

**Colophon.** इति श्रीमच्छारीरकमीमांसाभाष्यविवरणे प्रकटार्थे श्रीमच्चतुर्थाध्यायस्य चतुर्थः पादः ॥ समाप्तश्चायं ग्रन्थ इति ॥

विषयः । शारीरकमीमांसाभाष्यव्याख्यानं ॥

No. 2047. शिवार्कोदयः । Substance, country-made paper, 11 × 5 inches. Folia, 333. Lines, 11 on a page. Extent, 9,880 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Verse. Incorrect.

**S'ivárkodaya.** A metrical gloss on the metrical scholia of Bhaṭṭa Kumárila Svámí, on S'aṅkara's commentary on the Mímáṇsá Sútra of Jaimini. By Gágá Bhaṭṭa *alias* Viśveśvara Bhaṭṭa, son of Dinakara, grandson of Rámakṛishṇa, and great-grandson of Náráyaṇa Bhaṭṭasurí.

**Beginning.** आद्येऽध्याये धर्ममानं प्रमाणं मानाधीना मेयसिद्धिर्यतो हि ।
आद्ये पादे मानतात्रोदनानामुक्ता वाक्यार्थवादादिभागे ॥ १ ॥

**Colophon.** इति श्रीमन्नारायणभट्टसूरिसूनुश्रीमद्रामकृष्णात्मजभट्टदिनकरसुतगागा-भट्टकृतः शिवार्कोदयः समाप्तः ॥

विषयः । श्लोकैर्भट्टकुमारिलप्रणीतमीमांसासूत्रवार्त्तिकावशिष्टांशस्य पद्यैर्निर्वचनं ॥
पुस्तकमिदं खण्डितं ।

No. 2048. मीमांसाकुसुमाञ्जलिः । Substance, country-made paper, 12 × 5 inches. Folia, 439. Lines, 8—9—10 on a page. Extent, 11,264 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Incorrect.

**Mímáñsá-kusumáṇjali.** A scholia on the Mímáñsá Sútra of Jaimini. By Gágá Bhaṭṭa *alias* Viśveśvara Bhaṭṭa, son of Dinakara Bhaṭṭa. The codex is very defective.

**Beginning.** निर्विघ्नमस्तु । वन्दे मन्दकुमारस्यापिमनोधारिरूपस्य ।
कनराधापरिचरणौ चरणौ करुणानिधेः सुखधेः ॥ १ ॥
धारं यत् श्रुतिशिरसां दुष्प्रापं यन्मनोवचसां ।
तत् कौमारवचसां शिवापापहरं वन्दे ॥ २ ॥
उमामहेश्वरसदृशौ लक्ष्मीनारायणाविव ।
प्रभादिवाकरसमौ पितरौ समुपास्महे ॥ ३॥

मीमांसाकुसुमानामस्मिन्विरेचीऽस्मयादन्तः ।
श्रीरामपादसंग्रो वासेन दिव्यः सतार्थयतु ॥ ४ ॥
विश्वेश्वरापराख्यस्य गागाभट्टमनीषिणः ।
कृतिः करोतु कृतिनां हृदये वासमादरात् ॥ ५ ॥

आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते । पूर्व्वपादे विधिनिषेधयोर्वेद-लेन सामान्येन विशेषरूपेण च प्रामाण्ये सिद्धे अधुनोपस्थितेषु भागान्तरेषु प्रामाण्यं प्रतिपाद्यते ॥

**Colophon.** इति मीमांसकभट्टदिनकरसूनुगागाभट्टापरनामकविश्वेश्वरभट्टविरचिते मीमांसाकुसुमाञ्जलौ द्वितीयाध्यायस्याष्टमः पादः ॥

विषयः । मीमांसासूत्रव्याख्यानं । पुस्तकमिदं प्रथमे मध्ये चरमे च खण्डितं ॥

---

**No. 2049.** महारामायणं वा वाशिष्ठरामायणं, वाशिष्ठतात्पर्य्यप्रकाश-नामटीकासहितं, उत्तरार्द्धं । Substance, country-made paper, 15¼ × 9 inches. Folia, 1,509. Lines, 16 on a page. Extent, 75,000 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose and verse. Incorrect.

**Mahárámáyaṇa** alias **Vaśishṭha-rámáyaṇa**. A version of the history of Ráma, distinct from that of Válmíki. Usually attributed to the sage Vaśishṭha, but probably of a much later date, and founded on the work of Válmíki. The work is divided into two parts, of which the first treats of the history of Ráma, and the second expounds, in a dialogue between Ráma and Vaśishṭha, the principles of the Yoga doctrine as the most approved means of final emancipation. In this respect it appears like an imitation of the Bhagavadgítá. The leaning of the former is more in favour of the Yoga, and that of the latter in favour of the Vedánta; but in neither case is the following faithful.

**Beginning.** अजमजयमनाद्यनन्तमम्लानिसुखबोधसद्द्वितीयं पूर्णं ।
शिवमखिलहृदि स्फुरत्स्वमायाविकल्पितविश्वविलाससमाततं च ॥ १ ॥
स्फुतिफलितसमस्तामीष्टमुद्यदिनेशप्रतिभटनिजशोभाशान्तविघ्नान्धकारं ।
कमपि शिवभवान्योरङ्कसौभाग्यमन्तःसुरमणिमवलम्बे चारुलम्बोदराख्यं ॥ २ ॥
मगधशिलार्चितमनेः शमुखन्दविम्बं स्निग्धामृतप्रतिमचारुलपाकटाक्षं ।
अपेमरेरमुकं मुनिभिर्मुनीनां न्यग्रोधमूलवसतिं गुरुमाश्रयामः ॥ ३ ॥

त्रिभुवनपावनसत्यव्रतोदयः सद्भयामलबोधसुखोदयः ।
सुजनहृद्गिरिगह्वरकेसरी शरणमस्तु सदा नरकेसरी ॥ ४ ॥
हस्ते वराक्षवलयावभयञ्च वामे या पुस्तकञ्च दधती विधिनेत्रपेया ।
सा शारदाब्जनयना शरदिन्दुशोभा भासा स्वया हरतु मे हृदयान्धकारं ॥ ५ ॥
ये नेत्राणि हरस्य यैर्जगदिदं प्रद्योतितं चेष्टते
येऽत्रैवापतते श्रुतिस्मृतिमतो धर्म्मः स शर्म्मोदयः ।
ये कालं कलयन्ति ये च परमस्वज्योतिरात्मोपमा-
स्ते सूर्य्येन्दुहुताशना भवन्तु हृदि मे बोधाब्जिनीभानवः ॥ ६ ॥
वक्त्रेन्दुभिर्दिक्षु तमो हरद्भिर्वेदार्थसारामृतमुद्गिरन्तं ।
वाणीभुजाश्लिष्टमभीष्टसिद्ध्यै तं ब्रह्मविद्यादिगुरुं प्रपद्ये ॥ ७ ॥
यद्वाक्यामृतपायिनां प्रतिपदं सत्यं सुधा नीरसा
यद्वाक्यार्थविचारणादभिमतः स्वर्गोऽपि कारागृहं ।
यद्वाणीविशदात्मपूर्णमनसां तुच्छं जगत् तूलवत्
तस्मै श्रीगुरवे वशिष्ठमुनये नित्यं नमस्कुर्म्महे ॥ ८ ॥
यस्यार्षप्रथिता जगत्त्रयहिता सा वेदमाता परा
यश्चक्रे तपसा वशे सुरगणानन्यान् सिसृक्षुर्जगत् ।
तं बोधाम्बुनिधिं तपस्विमुकुटालङ्कारचिन्तामणिं
विश्वामित्रमुनिं शरण्यमनघं भूयो नमस्याम्यहं ॥ ९ ॥
श्रुत्वा ब्रह्मेव रामः प्रकटितमहिमा यत्र तस्मै वशिष्ठः
यः सीतां ब्रह्मविद्यामिव सदसि पुनः सत्यशुद्धां किलादात् ।
यद्वाणी मोक्षमूलं शमयति जगदानन्दसन्दोहदोग्ध्री
तस्मै वाल्मीकये श्रीगुरुतमगुरवे भूरिभावैर्नताः स्म ॥ १० ॥
पूर्णानन्दस्वभावस्वजनहितकृते माययोपात्तकायः
कारुण्यादुद्दिधीर्षुर्जनमनवरतं मोहपङ्के निमग्नं ।
आविद्यान्तर्वशिष्ठं वहिरपि कलयन् शिष्यभावं वितेने
यः संवादेन शास्त्रामृतजलधिममुं रामचन्द्रं प्रपद्ये ॥ ११ ॥
विद्याभिः सह विश्रुता स्थितवती येषां मुखे भारती
सत्त्वोत्कर्षसमाधिभिः स्थिरमहो तद्ब्रह्म येषां हृदि ।
पादाम्भोरुहमाश्रिताश्च सततं तीर्थैः समं सम्पदः
श्रीसर्व्वज्ञसरस्वतीतिविदितान् श्रीमद्गुरूंस्तान् भजे ॥ १२ ॥
श्रीः संश्रितेव चरणौ हृदयञ्च रामचन्द्रो मुखं गुणभरेण सरस्वती च ।

येषामनवद्यभिधाङ्कितनामधेयान् श्रीमद्गुरून् गुरुतरान् प्रणतोऽस्मि नित्यं ॥ १३ ॥

तापत्रयक्षितिव्यापनकारणकटाक्षव्याख्यावाणीनिहतसर्व्वाङ्घ्रिशरण्यान् ।
श्रीमज्ज्ञानानन्दमुनीन्द्रांस्तपश्चर्य्यानार्य्यान्नित्यं देशिकवर्य्यान् प्रणतोऽस्मि ॥ १४ ॥

विश्वेशोऽपि हरिः शरण्यचरणो याम् मानयन् सौहृदा-
ध्यानान्नित्यमनुव्रजामि रजसा पूये पदेनाब्रवीत् ।
यत्पूजां विदधे श्रुतिर्मतिमतां सर्व्वेष्टसिद्ध्यै सदा
जीवन्मुक्तसुखात्मपूर्णमनसस्तान् ब्रह्मनिष्ठान् भजे ॥ १५ ॥

कृतिभिरसुकराः क नु प्रबन्धाः क च ते बालिशबुद्धिरेष जन्तुः ।
तदपि विदधेऽत्र सद्गुरूणां सदयनिरीक्षणमेव मेऽवलम्बः ॥ १६ ॥

अशेषविद्याम्बुधिपारगानामपास्तरागादिमनोमलानां ।
कृपानिधीनां कृतिनां ममास्मिन् सतां पदाब्जस्मरणं सहायः ॥ १७ ॥

यत्कृपालेशमात्रेण तीर्य्येऽस्मिन् भवसागरं ।
श्रीमद्गङ्गाधरेन्द्राख्यान् श्रीगुरूंस्तान् सदा भजे ॥ १८ ॥

आनन्दबोधयतिना श्रीमद्गुरुवचोऽमृतैः ।
वाञ्छितार्थप्रकाशोऽयं यथामति वितन्यते ॥ १९ ॥

प्रशंसन्तु स्वैरं मतिभिरथ निन्दन्तु सुधियः
प्रवृत्तिर्मे यस्मान्न भवति जनाराधनकृते ।
अनेन व्याजेनात्मनरसवशिष्टोक्तिभरिते
विहर्त्तुं वाञ्छामि प्रतिदिवसमानन्दजलधौ ॥ २० ॥

यथामति बुभुत्सुभ्यः साहाय्यं सत्कृतेष्विव ।
दुरूहश्लोकभावेषु दर्शयिष्ये परिश्रमं ॥ २१ ॥

स्थितमेकरसे युक्त्या नानारसविजृम्भणं ।
वाञ्छितं रोचयत्येतत् सुभोज्यं लवणं यथा ॥ २२ ॥

अप्यल्पमतिदुर्बोधं स्फुटं व्याख्यास्यते पदं ।
द्विचिव्याख्यातपूर्व्वन्तु दुरूहमपि मोक्ष्यते ॥ २३ ॥

अनन्यपूर्व्वव्याख्यातं ग्रन्थं मे व्याचिकीर्षतः ।
सन्तः क्षमन्ताः कृपया क्षमध्वं स्खलितं क्वचित् ॥ २४ ॥

अथ जगदिदमनादिमहामोहनिद्रासुप्तमनवरतदुःखप्रबन्धपरम्पराकल्पिते जन्मजरामयमरण-
हर्षामर्षशोकाद्यनर्थसंकटमहासंकुले पच्यातिमहाव्याघ्रभीषणे तापत्रितयदावानलज्वालामालाकुले
षडूर्मिजालेऽतिषड्वर्गव्याधवध्यमानप्राणिनिकाये संसारमहारण्ये मुह्यमानं विवेकान्धं प्रबोधोपाय-
दौर्लभ्याद्विषीदन्तं समुदीक्ष्य प्राज्ञमानुद्येन तत्प्रबोधनाय भगवतः पद्मजन्मनः प्रागमा

सुतश्च प्रवर्णमानः परमकारुणिको भगवान् वाल्मीकिः प्रारिप्सितस्य महतः शास्त्रस्य निर्व्विघ्न-परिसमाप्तिप्रचयगमनादिसिद्धये वक्ष्यमाणश्रुतिस्मृतिसदाचारप्रापितं सर्व्वविघ्नमूलोच्छेदक्षमं सच्चिदानन्दाद्वयप्रत्यगात्मपरब्रह्मप्रणतिलक्षणं मङ्गलमाचरन् चर्य्याख्याख्यस्य विषयप्रयोजने तटस्थ-स्वरूपलक्षणाभ्यां संक्षिप्य दिदर्शयिषुः प्रथमं यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्मेतिश्रुत्युक्ततटस्थलक्षणसिद्धसदद्वयस्वभावं तत्पदार्थं नमस्यति यत इति ॥

मू० । यतः सर्व्वाणि भूतानि प्रतिभान्ति स्थितानि च ।
यत्रैवोपशमं यान्ति तस्मै सत्यात्मने नमः ॥

End. यत् सर्व्वं खल्विदं ब्रह्म तज्जलानि तिच(?)स्फुटं ।
श्रुत्या च्छुदीर्य्यते यान्ति तस्मै ब्रह्मात्मने नमः ॥ २५ ॥

Colophon. इति श्रीमद्रामायणे निर्व्वाणप्रकरणे उत्तरार्द्धे बालकाण्डे मोक्षोपाये देव-दूतोक्ते शतसाहस्र्यां संहितायां वाशिष्ठे ब्रह्मदर्शने षोड़शोत्तरद्विशततमः सर्गः २१६ । सम्पूर्णश्चेदं निर्व्वाणप्रकरणमुत्तरार्द्धमिति शिवं ।

टी० । वाक्यपुष्पाञ्जलिः सोऽयं मया भक्त्या समर्पितः ।
धियः प्रेरकयोः श्रीमच्छिवयोः श्रीपदाब्जयोः ॥ ४ ॥

इति श्रीवाशिष्ठतात्पर्य्यप्रकाशे निर्व्वाणप्रकरणे उत्तरार्द्धे षोड़शोत्तरद्विशततमः सर्गः २१६ इति श्रीमत्परमहंसपरिव्राजकाचार्य्यश्रीसर्व्वज्ञसरस्वतीपादशिष्यश्रीरामचन्द्रसरस्वतीपूज्यपादशि-ष्यश्रीगङ्गाधरेन्द्रसरस्वत्याख्यभिक्षोः शिष्येण आनन्दबोधेन्द्रभिक्षुणा विरचितः श्रीवाशिष्ठतात्पर्य्य-प्रकाशः सम्पूर्ण इति ॥

विषयः । वाशिष्ठोत्तरार्द्धव्याख्यानं । वाशिष्ठोत्तरार्द्धे तु रामवशिष्ठसंवादेन निर्व्वाणमोक्ष-निरूपणं ।

---

**No. 2050.** ईश्वरगीताभाष्यम् । Substance, country-made paper, 11½ x 3½ inches. Folia, 105. Lines, 9 on a page. Extent, 3,120 ślokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Correct.

**I'śvaragítá-bháshya.** A commentary on an episode of the Kúrma-purána. By Vijnána Bhikshu. In this episode Súta expounds to the sages assembled in the Naimisha forest the principles of the Vedánta doctrine. It is obviously an imitation of the Bhagavadgítá, but it differs from its archetype in dwelling exclusively on Vedántism, instead of mixing it with the Sáṅkhya and the Yoga doctrines. The text has already been noticed, see vol. I, p. 257.

**Beginning.** यो मायया विगुणया विरचय्य विश्वमंशैः प्रविश्य सकलोऽभवदेक आत्मा ।
यस्माच्च भिन्नमपि सर्व्वमभिन्नमस्मा मा मेऽपसर्पतु हरौ हृदयेश्वरोऽसौ ॥
सर्व्ववेदान्तसारार्थसंग्राहिण्या अतिस्फुटं ।
भाष्यमीश्वरगीतायाश्चक्रे विज्ञानभिक्षुकः ॥
एतेन भगवद्गीताव्याख्यापेक्षापि यास्यति ।
शब्दादिभेदमात्रेण गीतयोरर्थसाम्यतः ॥
श्रीनारायणेन कूर्म्मरूपिणा शक्रादिभ्योऽखिलपुरुषार्थसाधनं ज्ञानं कर्म्म च कूर्म्मपुराणे सम्यगुप-
दिष्टं तदेतत् सूतमुखादुपश्रुण्वन्तः शौनकादयो ज्ञानसारं विस्तरतः श्रोतुकामाः पुनः सूतं पप्र-
च्छुरित्याह पुराणकर्त्ता व्यासदेवः । ऋषय ऊचुरिति यद्रूपस्तदाह भवतेति ।

**End.** चातुर्वर्ण्यस्यैवात्राधिकारोऽस्ति ब्राह्मणैस्तु विशेषत इदं जपं कर्त्तव्यं शूद्रस्य
तु पाठेऽधिकारो नास्तीति विशेषः ।

**Colophon.** इति कूर्म्मपुराणे ईश्वरगीतासूपनिषत्सु विज्ञानभिक्षुकृतभाष्ये दशमो-
ऽध्यायः । ईश्वरगीताभाष्यं समाप्तं ॥

विषयः । वेदान्तसारार्थसंग्राहिण्याः कूर्म्मपुराणान्तर्गतेश्वरगीताया व्याख्यानं ॥

---

**No. 2051.** प्रश्नोपनिषदालोकः । Substance, country-made paper, 11½ × 3¼ inches. Folia, 17. Lines, 10 on a page. Extent, 544 ślokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Correct.

**Praśnopanishadáloka.** A gloss on the Praśnopanishad, one of the Upanishads of the Atharva Veda. By Vijnána Bhikshu. The text along with the commentary of S'aṅkara Áchárya and the gloss of Ánandagiri has been printed twice. and the text has been translated into English by Rájá Rámamohan Ráya, Dr. Roer, Bábu Rájnarain Bose and others.

**Beginning.** अथ प्रश्नोपनिषद्व्याख्यायते ॥ ॐ केशी च भारद्वाज इत्यादि । प्रणवोच्चा-
रणं सर्व्वविघ्नोपशमार्थं । सुकेशी नामतः भरद्वाजस्यापत्यं भारद्वाजः तथा शिवेरपत्यं शैव्यः सत्य-
कामो नामतः तथा सौर्य्यायणी नामतः गर्गस्यापत्यं गार्ग्यः तथा कौशल्यो नामतः अश्वलस्यापत्यं
आश्वलायनः तथा भृगोरपत्यं भार्गवः वैदर्भिर्नामतः तथा कबन्धी नामतः कत्यस्यापत्यं कात्या-
यनः ते च प्रसिद्धा एते षट्संख्या मुनयो ब्रह्मपरा वेदतत्परा ब्रह्मनिष्ठाः कार्य्यब्रह्मोपासकाः परं
ब्रह्मान्वेषमाणाः ज्ञातुमुद्युक्ता बभूवुरित्यर्थः ।

**End.** ब्रह्मविद्यासम्प्रदायकर्तृन् नमस्कुर्वन्ति नम इति द्विर्वचनं समाप्त्यर्थं ॥ षष्ठः प्रश्नः ॥

**Colophon.** इति शिवरामभिक्षुकृते वेदान्तालोके प्रश्नोपनिषदालोकः समाप्तः ॥

विषयः । प्रश्नोपनिषद्व्याख्यानं ।

---

**No. 2052.** शास्त्रदीपिका । Substance, country-made paper, 10 × 4½ inches. Folia, 388. Lines, 9 on a page. Extent, 9,871 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Incorrect.

**S'ástra-dípiká.** A commentary on the Mímáńsá aphorisms of Jaimini. By Párthasárathi Miśra. The codex is very corrupt and defective.

**Beginning.** पुरुषाणां प्रथमश्रुतोऽनर्थक इति विरोधापत्तेः । तदुक्तं ।

**End.** तदेवं सूत्रार्थं यदपि च निषिद्धं विकृतिषु
तथा प्रत्याम्नातं विविधमिह बाध्यं यदवसितं ।
अतस्त्वन्यस्याभ्युच्चयविधिरिति यत्नैव (?) सु
प्रयोगे यत्नाथाः (?) त्वत उपरिचिन्त्यां प्रकुरुते ॥

**Colophon.** इति श्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां दशमस्याध्यायस्याष्टमः पादः समाप्तः ॥

विषयः । मीमांसासूत्रव्याख्यानं । पुस्तकमिदं प्रथमे मध्ये शेषे च खण्डितं ॥

---

**No. 2053.** स्कन्दपुराणीय-अम्बिकाखण्डः । Substance, foolscap paper, 13 × 8¼ inches. Folia, 232. Lines, 16—17 on a page. Extent, 11,740 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Verse. Incorrect.

**Ambiká-khaṇḍa** of the **Skanda Puráṇa.** A part of the first or Máheśvara khaṇḍa of the seven divisions of the Skanda Puráṇa. The codex assigns it 216 chapters, and their contents are as follow :—1, Birth of Kártikeya ; 2, Abstract of the work ; 3, Origin of the Naimisha forest ; 4, Prájápatyábhisheka ; 5, Birth of Rudra ; 6, Lopping off of the heads of Brahmá ; 7, Restoration of the heads ; 8, Devas' visit to Rudra ; 9, Birth of Suvarṇáksha ; 10, Curse on Daksha ; 11, Penance of Umá ; 12, Alligators (?) ; 13, Marriage of Umá ; 14, Praise of marriage with S'iva ; 15, Benediction on Vaśishtha ; 16, Birth of S'akti, son of Vaśishṭha ; 17,

Curse on Kalmásapáda; 18, Rákshasa sacrifice; 19, Dispute between Vaśishṭha and Viśvámitra; 20—24, Story of Nandi; 25, Marriage of S'iva; 26, Umá's request; 27, Gift of cattle, gold &c. to S'iva; 28, Worship of S'iva; 29, Kuvera's benediction on Panchachúḍa; 30, Praise of Benares; 31, Do. of Dadhicha; 32, Destruction of Daksha's sacrifice; 33, Birth of Vṛisha; 34, Benediction on Upamanyu; 35, Do. on Sukeśa; 36—48, Description of various hells; 49, Philosophy expounded by Yama *(Yamagítá)*; 50, Mutation of creation; 51, Praise of Sukeśa; 52, means of escaping from hell; 53, Penance of Durgá; 54—56, Brahmá's benedictiom on Durgá; 57, Story of the seven fowlers; 58, Kingdom of Brahmadatta; 59—68, Story of Kauśika; 69, Hara and Párvati's tour to Mandára; 70—71, Story of Narasiṅha; 72, Birth of Skanda; 73, Do. of Andhaka; 75—76, Story of Hiraṇyáksha; 77, Sacrifice of the Asuras; 78 to 106, Wars of the Devas and Asuras; 107—108, Story of Varáha; 109, Departure of Mahádeva to Sumeru; 110, Fruits of gifts; 111, Penances; 112, Duties of women; 113—115, The churning of nectar; 116—121, Legend of the Dwarf incarnation; 122, Destruction of Sriṅhikeya; 123, Story of Hariśchandra; 124, Story of Paraśuráma; 125, Worship of Vasudhá; 126—128, Story of the descent of the Ganges; 129—148, Wars of Devas and Asuras; 149—151, Story of Párvatí's accepting an Aśoka tree for a son; 152, S'iva expounds Dharma; 153, Story of S'iva's throat becoming blue; 154, On the propriety of rubbing ashes and dust on the body; 155, On S'iva's dwelling on burning grounds; 156, An offering of aromatic waters to S iva; 157—159, Sacred edifices; 160, Feasts of Bhairava; 161, Birth of Vináyaka; 162, Birth of Skanda; 163, Devas repair to behold Skanda; 164, Mátṛís deputed by Indra to assassinate Skanda; 165, Battle between Skanda and Indra; 166—169, Skanda appointed generalissimo of the army of the Devas; 170—173, Destruction of Tárakásura; 174, Indra's address to Skanda; 175, Destruction of Mahisásura; 176, Thrones of Maheśvara; 177, Hymns in praise of do.; 178, Story of the messengers of Yama and Saṅku; 179, Account of Kálanjara; 180—181, Story of reviving Yama; 182, Temples for gods; 183, Story of Bhadreśvara; 184, Fruit of reciting the name of Mahádeva in a Deodar forest; 185, Temples of gods; 186, Benediction on Maya; 187—195, Legend of Tripura; 196—197, Description and revival of Krauncha; 198—200, The wars of Pralháda; 201—206. Story of Himavat and the clipping of his wings; 207—216, Story of Prahláda's wars with Náráyaṇa and its consequences.

**Beginning.** हस्त्याननः सकलचन्द्रनिभैकदन्तः सर्व्वात्मको गणपतिर्भुजगोपवीती ।
विघ्नानि नाशयतु लोकविधौ ममासौ देवी च सा कमलिनी वरदास्तु लक्ष्मीः ॥
नमः परमदेवाय त्रैगुण्यविजितात्मने ।
सर्व्वतो योगरूपाय संसारभारहेतवे ॥
स्थितिसंहारसर्गाणां कर्त्रे हर्त्रे पुरारिणे ।
षड्विंशाय पुराणाय महादेवाय धीमते ॥
प्रजापतेर्महाक्षेत्रे गङ्गाकालिन्दिसङ्गमे ।
प्रयागे परमे पुण्ये ब्रह्मणो लोकवर्त्मनि ॥
मुनयः संशितात्मानस्तपसा क्षीणकल्मषाः ।
तीर्थसंप्लावनार्थाय पौर्णमास्यां कृताह्निकाः ॥
पौराणिकमपश्यन्त सूतं सत्यपरायणं ।
स्नातमस्मिन् महातीर्थे प्रणामार्थमुपागतं ॥
दृष्ट्वा ते सूतमायातं ऋषयो हृष्टमानसाः ।
आचार्य्यासनमस्मै च तद्योग्यं समकल्पयत् ॥
स प्रणम्य ततः सर्व्वान् सूतस्तान् मुनिपुङ्गवान् ।
प्रदत्तमासनं भेजे सर्व्वधर्म्मागमान्वितः ॥
तमासीनमपृच्छन्त मुनयस्ते समाहिताः ।
ब्रह्मसत्रे पुरासीना नैमिषारण्यवासिनः ॥
कथितं भरताख्यानं पुराणञ्च पुरा त्वया ।
तेन नः प्रतिभाषितं साक्षात् सत्यवतीसुतः ॥
सर्व्वागमपरार्थज्ञः सत्यधर्म्मपरायणः ।
द्विजपूजारतो नित्यं तेन पृष्टा त्वमर्हसि ॥
भारताख्यानसदृशं पुराणाद् यद्विशिष्यते ।
तत्त्वां पृच्छामि वै जन्म कार्त्तिकेयस्य धीमतः ॥

**End.** ते म्हीनायुधाः सर्व्वे बलवन्तो महासुराः ।
मुखैश्चन्द्रप्रतिमाननगो——————बभूव भूरतितरां सुदुर्गमा ॥

**Colophon.** इति स्कन्दपुराणे एकाशीतिसाहस्र्यां संहितायामम्बिकाखण्डे प्रह्लाद-नारायणीये इन्द्रागमनं समाप्तं । समाप्तोऽयमम्बिकाखण्डाख्यो ग्रन्थः ।

विषयः । अत्र १मे अध्याये, कार्त्तिकेयोद्भवप्रश्नः । २ये, अनुक्रमणिका । ३ये, नैमिषोत्पत्तिकथनं । ४र्थे, ब्रह्मणः प्राजापत्याभिषेकः । ५मे, यज्ञोत्पत्तिः । ६ष्ठे, ब्रह्मणः शिरश्छेदनष्टमाक्तं । ७मे, कपालसंस्थापनं । ८मे, देवैः रुद्रदर्शनविवरणं । ९मे, सुवर्णाक्षोत्पत्तिवर्णनं । १०मे, दक्ष-

शापवर्णनं। ११ शे, उमातपस्यावर्णनं। १२ शे, महादेवाश्रमोपवर्णनं। १३ शे, उमापरिचयनं। १४ शे उमाविवाहस्तवः। १५ शे, वशिष्ठवरप्रदानं। १६ शे, शक्तिनामकवशिष्ठपुत्रोत्पत्तिः। १७ शे, कल्माषपादशापविवरणं। १८शे, राक्षसत्वनिरूपणं। १९ शे, वशिष्ठे विश्वामित्रेण वैरनि-र्वर्णनं। २०शे, नन्दितपःप्रवेशः। २१ शे, नन्दिना महादेवस्तुतिः। २२शे, जप्येश्वरचेष्टकथनं। २३शे, नन्दीश्वराभिषेकार्थं महादेवेन इन्द्रादिदेवताह्वानं। २४शे, नन्दीश्वराभिषेकस्तुतिकथनं। २५ शे, नन्दीश्वरविवाहकथनं। २६ शे, माता मेनया कथितां पतिनिन्दां श्रुत्वा दुःखिता पार्व्वती शिवसमीपमागत्य सर्व्वमाविष्कार इत्यादिविवरणं। २७शे, शिवाय गो-हिरण्यादिदानफलं। २८ शे, शिवपूजाविधिः। २९ शे, कुवेरपद्मचूडावरप्रदानं। ३० शे, वाराणसीमाहात्म्यं। ३१शे, दधीचमाहात्म्यं। ३२ शे, दक्षयज्ञविनाशवर्णनं। ३३ शे, इन्द्रोत्पत्तिवर्णनं। ३४शे, उपमन्युवरप्रदानं। ३५शे, सुकेशवरप्रदानं। ३६शे, पितृप्रश्नः। ३७शे, नरकसङ्ख्याकीर्त्तनं, नरकभीतिवर्णनञ्च। ३८शे, शाल्मलीनामनरकवर्णनं। ३९शे, कालसूत्रकनरकवर्णनं। ४०, कुम्भीपाकनरकवर्णनं। ४१, असिपत्रवनाख्यनरकवर्णनं। ४२, वैतरणीनरकवर्णनं। ४३, अमोघनरकवर्णनं। ४४, पद्माख्यनरकवर्णनं। ४५, महापद्माख्यनरकवर्णनं, रौरवनरकवर्णनञ्च। ४६, महारौरवनरकवर्णनं। ४७, तमोनामनरकवर्णनं। ४८, तमस्तमोनामनरकवर्णनं। ४९, यमगीताकथनं। ५०, संसारपरिवर्त्तनकथनं। ५१, सुकेशमाहात्म्यं। ५२, नरकाभावोपायवर्णनं। ५३, दुर्गातपोवर्णनं। ५४, ब्रह्मप्रयाणवृत्तान्तं। ५५, ब्रह्मागमनवृत्तान्तं। ५६, दुर्गावरप्रदानं। ५७, सप्तव्याधोपाख्यानं। ५८, ब्रह्मदत्तस्य राज्ञो वृत्तान्तं। ५९, कौशिकीसम्भववर्णनं। ६०, कौशिक्या विन्ध्यगिरिगमनवृत्तान्तं। ६१, दैत्योद्योगवर्णनं। ६२, सुन्ददैत्यवधवर्णनं। ६३, असुरविजयवर्णनं। ६४, असुरोद्यमवर्णनं। ६५, ६६, देव्या कौशिक्या सह असुराणां युद्धवृत्तान्तं। ६७, कौशिक्यभिषेचनं। ६८, कौशिकीदेहसम्भवा या देव्यस्ता देशेषु नगरेषु च देवा न्यवेशयन् इत्यादिवृत्तान्तं। ६९, पार्व्वत्या सह हरस्य मन्दरगमनवृत्तान्तं। ७०, ७१, नारसिंहेन हिरण्यकशिपुवधवृत्तान्तं। ७२, स्कन्दोत्पत्तिवर्णनं। ७३, अन्धकोत्पत्तिविवरणं। ७४, अन्धकवरप्रदानं। ७५, हिरण्याक्षस्य स्वपुरप्रवेशवृत्तान्त। ७६, हिरण्याक्षस्य सभाप्रवेशवृत्तान्तं। ७७, असुरयागवर्णनं। ७८—१०६, अष्टसप्तत्यध्यायावधि षडुत्तरशताध्यायपर्य्यन्तं देवासुरयुद्धवर्णनं। १०७, वराहोत्सववर्णनं। १०८, वराहप्रयाणवृत्तान्तं। १०९, महादेवस्य सुमेरुगमनवृत्तान्तं। ११०, दानफलनिरूपणं। १११ एकभक्तादिव्रतफलकथनं। ११२, स्त्रीणां धर्म्मनिरूपणं। ११३, अमृताक्षेपवर्णनं। ११४, अमृतमन्थने नीलकण्ठोपाख्यानं। ११५, विष्णुना अमृतेऽपहृते असुरैः सह देवानां युद्धं। ११६, ११७, वामनप्रादुर्भावः। ११८, शुक्रवासवसंवादः। ११९-१२०-१२१, वामनप्रादुर्भावे तीर्थयात्रावर्णनं। १२२, सैंहिकेयवधवर्णनं। १२३, हरिश्चन्द्रनिर्द्देशः। १२४, महादेवात्परशुरामवरप्राप्तिवर्णनं। १२५, वसुधाप्रतिष्ठावर्णनं। १२६, १२७, १२८, मत्स्यावतारवृत्तान्तं। १२९—१४८ ऊनत्रिंशदधिकशताध्यायावधि अष्टचत्वारिंशदधिकशताध्यायपर्य्यन्तं अन्धकासुरपराजयवृत्तान्तं। १४९,१५०,

१५१, पार्व्वत्या पुत्रलेमाशोकतरोः परिग्रहवृत्तान्तं। १५२, शूलिनो धर्म्मपद्धतिकथनं। १५३, महादेवकण्ठस्य विषाग्नीलत्वकथनं। १५४, भस्मरजसः कथं विलेपनत्वं इति पार्व्वतीप्रश्ने शिवोत्तरं। १५५, जगत्प्रभोस्तव कथं श्मशानवासित्वं इति पार्व्वतीप्रश्ने शिवोत्तरं। १५६, सुगन्धजलादिना शिवस्नापनफलकथनं। १५७,१५८, १५९, पुण्यायतनफलं। १६०, भैरवोत्सवकथनं। १६१, विनायकोत्पत्तिः। १६२, स्कन्दोत्पत्तिः। १६३, स्कन्ददर्शनार्थं देवादीनामागमनवृत्तान्तं। १६४, स्कन्दविनाशार्थं इन्द्रेण मातृगणप्रेरणं। १६५, स्कन्देन सह इन्द्रस्य युद्धवृत्तान्तं। १६६,१६७, स्कन्दस्य देवसेनापतित्वविवरणं। १६८, स्कन्दाभिषेकवर्णनं। १६९, स्कन्दाभिषेकद्रव्यासेचः। १७०, १७१, १७२, १७३, तारकासुरवधविवरणं। १७४, स्कन्दं प्रति इन्द्रवाक्यं। १७५, महिषासुरवधविवरणं। १७६, महेश्वरनामानि। १७७, महेश्वरस्तुतिः। १७८, क्षीणायुषं श्वेतमानेतुमागतानां यमदूतानां शङ्कुकर्णेन प्रत्याख्यानं। १७९, कालञ्जरायतनवृत्तान्तं। १८०, १८१, यमसञ्जीवनवृत्तान्तं। १८२, देवायतनोद्देशः। १८३, भद्रेश्वराख्यानं। १८४, देवदारुवने महादेवस्थानमाहात्म्यवर्णनं। १८५, आयतनवर्णनं। १८६, मयवरदानं। १८७, त्रिपुरवर्णनं। १८८,—१९५, अष्टाशीत्यधिकशताध्यायात् पञ्चनवत्यधिकशताध्यायपर्य्यन्तं त्रिपुरवधवृत्तान्तं। १९६, क्रौञ्चवधवर्णनं। १९७, क्रौञ्चसञ्जीवनं। १९८, १९९, प्रह्लादयुद्धं। २००, प्रह्लादविजयः। २०१, हिमवत्सम्भाषणं। २०२, गिरिवाक्यं। २०३, २०४, गिरिपक्षच्छेदवृत्तान्तं। २०५, मेघोत्पत्तिः। २०६, पक्षच्छेदनवृत्तान्तश्रवणफलं। २०७, २०८, नारायणेन सह प्रह्लादयुद्धोद्योगः। २०९, अनुह्रादवधवृत्तान्तं। २१०, नारायणेन चक्रसृष्टिवर्णनं। २११, प्रह्लादामरसङ्गमः। २१२, परमदैवतवचनं। २१३, दानवैः सह देवानां युद्धवृत्तान्तं। २१४, प्रह्लादतपश्चरणं। २१५, असुरप्रयाणोत्पातविवरणं। २१६, प्रह्लादनारायणयुद्धे इन्द्रागमनवृत्तान्तं ॥

---

**No. 2054.** यतीन्द्रमतदीपिका। Substance, country-made paper, 13 × 5½ inches. Folia, 25. Lines, 11 on a page. Extent, 937 ślokas. Character, Nágara. Date, Sm. 1894, Sk. 1759. Place of deposit, Calcutta, Governmen of India; also another copy at Berhampur, Bábu Rámadása Sena. Appearance, old. Prose. Incorrect.

**Yatindramata-dípiká.** A summary of the dualistic form of the Vedánta doctrine. By S'rínivásadása, son of Govinda A'chárya. The work is divided into 10 chapters, and treats of (1) Perception; (2) Inference; (3) Testimony; (4) Nature; (5) Time; (6) Eternal attributes; (7) Intellect; (8) Created beings; (9) God; and (10) Immateriality.

**Beginning**. श्रीवेङ्कटेशं करिशैलनाथं श्रीदेवराजं घटिकाद्रिसिंहम्।
कृष्णेन साकं यतिराजमीडे स्वप्ने च दृष्टान् मम देशिकेन्द्रान्। १।
यतीश्वरं प्रणम्याहं वेदान्तार्यं महागुरुं।
करोमि बालबोधार्थं यतीन्द्रमतदीपिकां ॥ २ ॥

श्रीमन्नारायण एव चिदचिद्विशिष्टाद्वैतं तत्त्वं भक्तिप्रपत्तिभ्यां प्रपन्नः स एव उपायः। अप्राकृतदेशविशिष्टः स एव प्राप्य इति वेदान्तवाक्यैः प्रतिपादयतां व्यास-बोधायन-गुहदेव-भारुचि-ब्रह्मानन्दि-द्रविड़ाचार्य्य-श्रीपराङ्कुशनाथ-यामुन-मुनियतीश्वरप्रभृतीनां मतानुसारेण बालबोधार्थं वेदान्तानुसारिणी यतिपतिमतदीपिकाख्या शारीरकपरिभाषा मा यथेहपावलम्बिमामया यथामति संग्रहेण प्रकाश्यते।

**End**. वस्तुतस्तु वेदान्तानां चिदचिद्विशिष्टाद्वैतमेकमेव ब्रह्मेति तात्पर्य्यं अत एव चिदचिद्विशिष्टं ब्रह्मैकमेवेति मत्वा भगवान् बादरायणः अथातो ब्रह्मजिज्ञासेत्युपक्रम्य तमेव प्रकारं निरूपितवान् अतः चिदचिद्विशिष्टो ब्रह्मशब्दवाच्यो विष्ण्वाख्यः परवासुदेवो नारायण एवैकं तत्त्वमिति विशिष्टाद्वैतवादिनां दर्शनमिति सिद्धं ॥

इति विविधविचित्रं मानमेयं प्रकाशं घनगुरुवरदासेनोक्तमादाय शास्त्र।
यतिपतिमतदीपं वेदवेदान्तसारं स भवति मतिमान् यः सत्कटाक्षैकलक्ष्यः ॥

**Colophon**. इति श्रीवाधूलकुलतिलकश्रीमन्महाचार्य्यस्य प्रथमदासेन श्रीमद्वेङ्कटगिरिनाथपदकमलसेवापरायणस्वामिचिफङ्कापुष्करिणीगोष्ठि वन्दार्य्यसूनुना श्रीनिवासदासेन विरचितायां यतीन्द्रमतदीपिकायामद्रव्यपरिच्छेदो नाम दशमोऽवतारः ॥

विषयः। श्रीमन्नारायण एव चिदचिद्विशिष्टाद्वैतं तत्त्वं इति प्रतिपादयतां व्यास-बोधायन-गुहदेव-भारुचि-ब्रह्मानन्दि-द्रविड़ाचार्य्य-श्रीपराङ्कुशनाथ-यामुन-मुनियतीश्वरप्रभृतीनां मतानुसारेण बालबोधार्थं संक्षेपतो दशभिः परिच्छेदैर्वेदान्तमततात्पर्य्यकथनं। तत्र १—मे परिच्छेदे, प्रत्यक्षनिरूपणं। २-ये, अनुमाननिरूपणं। ३-ये, शब्दनिरूपणं। ४-र्थे प्रकृतिनिरूपणं। ५ मे, कालनिरूपणं। ६ष्ठे नित्यविभूतिनिरूपणं। ७-मे, बुद्धिनिरूपणं। ८-मे, जीवनिरूपणं। ९-मे-ईश्वरनिरूपणं। १०-मे, अद्रव्यनिरूपणं ॥

---

**No. 2055**. दीपप्रकाशः। Substance, country-made paper, 9 × 4¼ inches. Folia, 42. Lines, 8—10 on a page. Extent, 1,036 ślokas. Character, Náarga. Date, Sm., 1785. Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Incorrect.

**Dípa-prákáśa**. On dedication of lighted lamps to the goddess Rájarájeśvarí according to Tántric rules. By Premanidhi S'armá.

**Beginning.** चगाधापन्नाभ्रेस्तरणकरणे सुन्दरतरी

चरीभूतोऽरातिप्रजप्रगमचामाननथने ।

करी मर्च्चामर्त्त्याद्यसुलभतरीभूतधिषणा-

द्दरीदाह्नप्रेम्नामिह जयति छीपात्मकहरिः ॥ १ ॥

**End.** यशोद्योतमती सती गुणवती माता पितोमापति-

र्नामप्रेमनिधीति पन्थकुलभूः कुर्म्माचलो जन्मभूः ।

स्रूपाख्यं कृतवीर्य्यजात्मजपदं भूष्टमलैवम्मभू-

इत्यानन्दवनेऽमुना निवसता दीपप्रकाशः कृतः ॥

**Colophon.** इति श्रीप्रेमनिधिशर्म्मनिर्म्मितो दीपप्रकाशः सम्पूर्णतामगमत् ॥

**विषयः ।** तन्त्रोक्तनियमेन श्रीराजराजेश्वरोद्देश्यकदीपदानविधिकीर्त्तनं ॥

---

**No. 2056.** शब्दप्रकाशः वा दीपप्रकाशटिप्पनम् । Substance, country-made paper, 9 × 3¾ inches. Folia, 121. Lines, 10 on a page. Extent, 3,210 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Incorrect.

**S'abdaprakáśa** alias **Dípaprakáśa-ṭippana.** A commentary on the work noticed under the last preceding No. by the author himself.

**Beginning.** प्रणम्येष्टदेवं शिवादेरपीष्टप्रदं राजराजेश्वराख्यं रमेशं ।

स्वदीपप्रकाशस्थितक्लिष्टशब्दप्रकाश तनोम्यद्य बालानुरोधात् ॥ १ ॥

अथ नानातन्त्रग्रन्थालोचनतद्व्याख्यादिकरणक्लेशपरिहारेण श्रीराजराजेश्वरोपासकजनश्रेणी-भूरोणोपकारादिद्वारा श्रीशिवदेवोपासनाप्रसादमाकाङ्क्षमाणो दीपप्रकाशनामानं साङ्गदीप-प्रकाशकतयान्वर्थं शिखरिणीस्रग्धराशार्दूलविक्रीडितच्छन्दोनिबद्धश्लोकमन्दाधात्मकं ग्रन्थं चिकीर्षुस्तत्समाप्तिप्रतिबन्धकप्रत्यूहव्यूहविध्वंसनार्थं स्वेष्टदेवस्य दीपप्रियतया तदात्मकतया स्मरण-स्याधिकतरं प्रसादकत्वमभिप्रेत्य दीपप्रकाशनिर्माणे दीपात्मकतयैव स्मरणस्योचिततमत्वं मत्वा च तथा स्मरणनमस्कारात्मकं मङ्गलं कृत्वा शिष्यशिक्षायै निबध्नाति । चगाधेत्यादि ।

**End.** अस्ति हि उत्तरस्यां दिशि मुक्तिक्षेत्रविषये ता + मेतिप्रसिद्धपर्व्वतदेशाना-मधिपतिः श्रीमल्लैवम्मदेवस्तदीयकृपाप्राप्तभूमिष्टणिध्यामन्नवस्त्रादिभोगपूर्व्वकं काश्यां निवसतेति वर्त्तुलार्थः । तथा च जन्मस्थानं भिन्नं वृत्तिस्थानं भिन्नं निवासस्थानञ्च भिन्नं ग्रन्थकर्त्तृत्वं दीप०

प्रकाशः दीपस्य पूर्व्वोपदिष्टस्य प्रकाशः प्रकटनं दीपप्रकाशनामा ग्रन्थश्च कतोऽनुष्ठितो बुद्धिपूर्व्वक न स्वकल्पज्ञान इत्यर्थः ।

इत्थं शब्दप्रकाशश्चरणकलनया राजराजेश्वरस्य
श्रीयाभीष्टार्थदातुर्मंगजलधिरसच्छाशके माघमासे ।
कष्णाष्टम्यां प्रपूर्णः परपरबधिरार्थस्य नाभावबोधो
मूलं मूलस्य यत्नादरणमिव परं लक्षि संक्षेपमात्रं ॥ १ ॥
अस्माभिः सकलः प्रयोग उदितो रत्नाकरे स्वहतो
मूलं भक्तितरङ्गिनीत्यभिहिते ग्रन्थेऽखिलं दर्शितं ।
तत्संक्षेपवचिप्रतोषफलके दीपप्रकाशे स्थिता
कष्टा शब्दततिः प्रकाशिततरार्था साम्प्रतं निर्मिता ॥ २ ॥
मास्त्वाश्चर्य्यं नृणां सप्राक्चानुष्ठितादितो ग्रन्थात् ।
दीपप्रकाशकर्त्तुर्नानाशाध्यं किमप्यस्ति ॥ ३ ॥
दीपप्रकाशे हि मनोऽस्ति यस्य शब्दप्रकाशेऽपि मनोऽस्तु तस्य ।
शब्दप्रकाशेन विना न नृणां दीपप्रकाशे भविता प्रवेशः ॥ ४ ॥
यशोयोतमती सती गुणवती माता पितोमापति-
र्नाम प्रेमनिधीति पन्थकुलभूः कुर्म्माचलो जन्मभूः ।
स्रूपास्यं कृतवीर्य्यजात्मजपदं भूभृन्मलेवसभू-
इच्छामन्दवनेऽमुना निवसता शब्दप्रकाशः कृतः ॥ ५ ॥

**Colophon.** इति श्रीमत्प्रेमनिधिशर्म्मनिर्म्मितदीपप्रकाशटिप्पनभूतशब्दप्रकाशग्रन्थः सम्पूर्णः ॥

**विषयः ।** स्वकृतदीपप्रकाशस्थितकूटशब्दार्थानां प्रकटीकरणं ।

---

**No. 2057. योगशास्त्रं ।** Substance, country-made paper, 11¾ × 4¼ inches. Folia, 5. Lines, 9 on a page. Extent, 126 ślokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India; also another copy at Murshidábad, Jápharaganj, Gopáladása Mahanta. Appearance, old. Prose. Incorrect.

**Yoga-śástra.** A brief exposition of the Yoga aphorisms of Patañjali. The codex is defective, and the name of the author of the work cannot be made out.

**Beginning.** (আদ্যপত্রং নাস্তি)। ধিগমোপায়াপায়াভাবস্ব ব্যাধিস্ত্যানসুম (?) সংশয়-প্রমাদালস্যাবিরতি-ভ্রান্তিদর্শনালব্ধভূমিকত্বানবস্থিতত্বানি।

**End.** কৈবল্যং স্বরূপপ্রতিষ্ঠা বা চিতিশক্তেরিতি।

**Colophon.** ইতি যোগশাস্ত্রে কৈবল্যপাদশ্চতুর্থঃ॥ সমাপ্তঃ।

বিষয়ঃ। পাতঞ্জলযোগসূত্রতাৎপর্য্যবিষয়ীভূতার্থস্য সংক্ষেপেণ কথনং॥

---

**No. 2058.** যোগমণিপ্রভা বা পাতঞ্জলযোগসূত্রবৃত্তিঃ। Substance, country-made paper, 11¾ × 4¼ inches. Folia, 60. Lines, 9 on a page. Extent, 1,134 ślokas. Character, Nagara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Incorrect.

**Yogamaṇi-prabhá.** A commentary on the Yoga aphorisms of Patanjali. By Rámánanda Sarasvatí, pupil of Govidánanda. It follows the Pátanjala-bháshya.

**Beginning.** বন্দে জগদাদ্যসংসৃষ্টং পুরাণপুরুষং হরিং।
প্রকৃত্যা প্রীতয়া যুক্তং যোগেশং যোগদায়িনং॥
পতঞ্জলিং সূত্রকৃতং প্রণম্য ব্যাসং মুনিং ভাষ্যকৃতং চ ভক্ত্যা।
ভাষ্যানুগাং যোগমণিপ্রভাখ্যাং বৃত্তিং বিধাস্যামি যথা মতিস্ব॥
ইহ খলু ভগবান্ পতঞ্জলিঃ প্রেক্ষাবৎপ্রবৃত্ত্যঙ্গশাস্ত্রপ্রতিপাদ্যং দর্শয়তি॥
অথ যোগানুশাসনম্॥

**End.** যন্নাহং প্রমাদনিরতঃ ক্ব বাক্যং গুরোরিদং।
নূনং মহাত্মনাং দীনে স্বতশ্চিত্তং কৃপান্বিতং॥

**Colophon.** ইতি শ্রীমৎপরমহংসপরিব্রাজকাচার্য্যগোবিন্দানন্দভগবৎপূজ্যপাদশিষ্য-শ্রীরামানন্দসরস্বতীকৃতৌ পাতঞ্জলসূত্রবৃত্তৌ যোগমণিপ্রভাখ্যায়াং কৈবল্যপাদশ্চতুর্থঃ সমাপ্তঃ॥

বিষয়ঃ। পাতঞ্জলযোগসূত্রস্য ভাষ্যানুগতব্যাখ্যানং॥

---

**No. 2059.** পথ্যাপথ্যবিবোধকঃ। Substance, country-made paper, 9 × 4½ inches. Folia, 118. Lines, 8—10 on a page. Extent, 3,729 ślokas. Character, Nágara. Date, Sm. 1767. Place of deposit, Calcutta, Government of India. Appearance, old. Verse. Incorrect.

**Pathyápathya-vibodhaka.** On diet and regimen. By Keyadeva Paṇḍit, a Vadya by caste.

**Beginning.** मत्वैकं विश्वरूपं त्रिभुवनशरणं स्वर्गमोचैकहेतुं
शम्भुं वाग्देवताञ्च व्यवहरति यया विश्वमेतन्निताम्नं ।
यस्य ध्यानप्रसादात् प्रभवति पुरुषः सर्व्वकार्य्यस्य सिद्धिं
कर्त्तुं तं देववन्द्यं स्मरदुरगवरस्फारहारं गणेशं ॥ १ ॥
भारद्वाजपवित्रगोत्रतिलकः श्रीपद्मनाभोऽभव-
द्वैद्याक्तनिनाटकागमकथालङ्कारपारङ्गमः ।
तत्पुत्रो गुणभूषितः समभवत् श्रीशार्ङ्गनामा भिषक्
येन प्राणिगदो गदैरपहृतोऽसौ सर्व्वविद्यालयः ॥ २ ॥
तत्पुत्रः केयदेवोऽस्ति वैद्यशास्त्रविशारदः ।
मणिरत्नाकरो येन कृतोऽल्पो नाम सागरः ॥
नामरत्नाकरोक्तानां द्रव्याणाञ्च रसादिषु ।
पथ्यार्थं क्रियते तेन पथ्यापथ्यविबोधकः ॥ ३ ॥

**End.** ओजः कान्तिर्बलं पुष्टिस्तुष्टिस्तूपचयः स्मृतः ।

**Colophon.** इति श्रीवैद्यकेयदेवपण्डितविरचिते पथ्यापथ्यविबोधके मिश्रवर्गोऽष्टमः सम्पूर्णोऽयं ॥

विषयः । पथ्यापथ्यविवेचनं ॥

---

**No. 2060.** न्यायकुसुमाञ्जलिप्रकरणम् । Substance, country-made paper, 13½ × 6¼ inches. Folia, 37. Lines, 13—14—15—18 on a page. Extent, 2,858 ślokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Government of India. Appearance, new. Verse. Correct.

**Nyáya-kusumáṇjali-prakaraṇa.** A polemical disquisition on the existence of God, refuting all atheistical doctrines. By Udayana Ácháraya. The work comprises a metrical portion, and a prose paraphrase. The former has been published with a translation into English by Professar E. B. Cowell. The latter is scarce. The codex under notice contains both the parts.

**Beginning.** सत्पक्षप्रसरः सतां परिमलप्रोद्बोधबद्धोत्सवो
विम्लानो न विमर्द्दनेऽमृतरसप्रस्यन्दमाध्वीकभूः ।

ईशस्यैव निवेशितः पदयुगे भृङ्गायमानं भ्रम-
न्नेतो मे रमयत्वविघ्नमनघः न्यायप्रसूनाञ्जलिः ॥
स्वर्गापवर्गयोर्मार्गमामनन्ति मनीषिणः ।
यदुपास्तिमसावत्र परमात्मा निरूप्यते ॥

**End.** इत्येष नीतिकुसुमाञ्जलिरुज्ज्वलश्री-
र्यद्वासयेदपि च दक्षिणवामकौ द्वौ ।
नो वा ततः किममरेश्वरगुरोर्गुरुस्तु
प्रीतोऽस्त्वनेन पदपीठसमर्पणेन ॥

**Colophon.** इत्याचार्य्यश्रीमदुदयनविरचितन्यायकुसुमाञ्जलिप्रकरणं समाप्तं ।

विषयः । ईश्वरे विप्रतिपन्नानां चार्व्वाक-मीमांसक-सौगत-दिगम्बर-साङ्ख्यानां मतं श्रीमदुदयनाचार्य्येणानेन गद्य-पद्योभयात्मकेन प्रबन्धेन निराकृतं ।

---

**No. 2061.** यजुर्वल्लभः । Substance, country-made paper, 9 × 4 inches. Folia, 81. Lines, 11—12 on a page. Extent, 2,065 Ślokas. Character, Nágara. Date, Sm. 1811. Place of deposit, Calcutta, Government of India. Appearance, old. Prose and verse. Incorrect.

**Yajurvallabha.** This is a part of the 'Áhnika-paddhati,' a comprehensive work on the duties of householders. By Viṭṭhala Díkshita. The part under notice comprises three chapters, and treats of, 1st, daily religious duties, 2nd, the sacraments, (*sañskáras*) 3rd, Ádhána or domestic fire worship. All those have been treated according to the rules of the Yajur Veda.

**Beginning.** योगिनो यं प्रपश्यन्ति हृदाकाशे सनातनं ।
\+ + + + + + वन्दे देवकीनन्दनं हरिं ॥
अस्मिन् कर्म्मसरणावाह्निकं प्रथमं ततः ।
संस्कारादीनावसथ्य विधिः काण्डैरहं ब्रुवे ॥

**End.** ततो ब्राह्मणभोजनं संकल्पयेत् । इत्याग्रयणपद्धतिः समाप्ता ॥

**Colophon.** इति श्रीविट्ठलदीक्षितनिबद्धायामाह्निकपद्धतौ यजुर्वल्लभाख्यायां आवसथ्याधानं सपरिकरं नाम तृतीयः खण्डः समाप्तः ॥ ३ ॥

विषयः । अत्र खण्डत्रयं वर्ण्यते तत्र प्रथमे यजुर्व्वेदोक्ताह्निककृत्यप्रयोगः । द्वितीये यजुर्वेदोक्तसंस्कारप्रयोगः । तृतीये यजुर्वेदोक्तावसथ्याधानप्रयोगः ॥

---

**No. 2062.** हौत्रिकपद्धतिः, यजुर्वेदोक्ता। Substance, country-made paper, 8¾ × 4 inches. Folia, 38. Lines, 8 no a page. Extent, 592 ślokas. Character, Nágara. Date, Sk. 1705. Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Incorrect.

**Hautrika-paddhati.** A guide-book for the performance of the Hautrika or fire sacrifices according to the Yajur Veda. Anonymous.

**Beginning.** शौचं कृत्वा संचरेण प्रविश्यापश्चमनीयं।

**End.** यासो वा तदुपांशु तदुपांशु॥

**Colophon.** इति यजुर्वेदिके हौत्रिके पञ्चमोऽध्यायः॥

विषयः। यजुर्वेदोक्तहौत्रिककर्म्मप्रपञ्चनं।

---

**No. 2063.** देवीमाहात्म्य-टीका। Substance, country-made paper, 15 × 4 inches. Folia, 92. Lines, 7 on a page. Extent, 2,598 ślokas. Character, Bengali. Date, ? Place of deposit, Lálagola, Post Dighápati, Zilá Rájasáhi, Bábu Táránátha Ráya Chaudhurí. Appearance, fresh. Prose. Correct.

**Devímáhátmya-tíká.** A commentary on the Chaṇḍí section of the Márkaṇḍeya Puráṇa. By S'aṅkara S'armá.

**Beginning.** श्रीदुर्गायाः पदं नत्वा श्रीमच्छङ्करशर्म्मणा।
देवीमाहात्म्यटीकेयं क्रियते विप्रसम्मता॥

पूर्व्वं भगवद्बादरायणमुनेः शिष्यो जैमिनिर्नाम मुनिर्भारतविषये सन्दिग्धमना मार्कण्डेयं समुपागम्य भो मुनेभारतविषयेऽस्मत्सन्देहो दूरीक्रियतामित्यवदत्। — — — — — — — — — — पठिण कृचः;—मार्कण्डेय उवाचेत्यादि।

**End.** सावर्णिर्भविता मनुरिति पुनराद्यभिः समाप्तिं द्योतयति सम्प्रदायसम्भवात्॥

**Colophon.** इति देवीमाहात्म्यटीका समाप्ता।

विषयः। मार्कण्डेयपुराणीयदेवीमाहात्म्यव्याख्यानं।

---

**No. 2064.** अमरकोषमाला । Substance, country-made paper, 15 x 4 inches. Folia, 250. Lines, 6 on a page. Extent, 5,906 ślokas. Character, Bengali. Date, ? Place of deposit, Lálagola, Post Dighápati, Zilá Rájasáhí, Bábu Táránátha Ráya Chaudhurí. Appearance, fresh. Prose. Correct.

**Amarakosha-málá.** A paraphrase of the 'Námalingá nuśásana' of Amara Siñha. Author's name not made out. The work has been written in accordance with the rules of the Kalápa-vyákaraṇa.

**Beginning.** अनादिमध्यान्तमनीशमीशं प्रणम्यत + + दमु' गिरीशं ।
निर्वाढयोगार्थकमूलसीनां निबध्य कुर्म्मोऽमरकोषमालां ॥
उपाया बहवः सन्ति निबन्धाः पाणिनेर्द्दिशा ।
तथापि मादृशां यतः खलु कालापतुष्टये ॥

अत्र ग्रन्थारम्भे शिष्टाचारसिद्ध्यर्थमशेषविघ्नविघातार्थञ्च अभीष्टदेवतायाः सेवनोपदेशेन प्रणामं दर्शयति यस्येत्यादि । हे धीराः स विष्णुः सेव्यतां भवद्भिरिति शेषः । इत्यादि ।

**Colophon.** समाप्तिसूचकवाक्यं नास्ति ।

विषयः । अमरकोषव्याख्यानं ।

---

**No. 2065.** दत्तकविवेकः । Substance, country-made paper, 18 x 3 inches. Folia, 4. Lines, 5 on a page. Extent, 75 ślokas. Character, Bengali. Date, ? Place of deposit, Lálagolá, Post Dighápati, Zilá Rájasáhi, Bábu Táránátha Ráya Chaudhurí. Appearance, fresh. Prose and verse. Correct.

**Dattaka-viveka.** A summary of the laws relating to adoption. By Súlapáṇi. It is one of several treatises the author wrote under the generic name of *Viveka*. He lived in the middle of the 12th century, and was a judge in the court of Lakshmaṇa Sena, of Bengal.

**Beginning.** अथ दत्तकविवेकः । तत्र याज्ञवल्क्यः ।
दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेत् ॥
मनुः । माता पिता वा दद्यातां यमद्भिः पुत्रमापदि ॥
सदृशं प्रीतिसंयुक्तं स पुत्रो दत्रिमः सुतः ॥
प्रीतिसंयुक्तमित्यनेन यथोऽधिकपुत्रदाने पुत्रानुमत्यपेक्षा प्रापिता । इत्यादि ।

**End.** संस्कृतस्य कृतस्यस्य वर्णानां भवत्युत ।
अथ देया तु कन्या स्यात् तद्वर्णस्य युधिष्ठिर ॥

**Colophon.** इति शूद्रपाणिग्रहणदत्तकविवेकः समाप्तः ।

**विषयः ।** दत्तकपुत्रग्रहणकर्त्तव्यतातदधिकारादिनिरूपणं ।

---

**No. 2066.** छन्दोमञ्जरीटीका । Substance, foolscap-paper, 16 × 4 inches. Folia, 18. Lines, 6 on a page. Extent, 446 ślokas. Character, Bengali. Date, ? Place of deposit, Lálagola, Post Dighápati, Zilá Rájasáhi, Bábu Táránátha Ráya Chaudhurí. Appearance, new. Prose. Correct.

**Chhando-manjarí-tíká.** A commentary on the *Chhando-manjarí,* an elementary treatise on versification. By Dátaráma.

**Beginning.** नत्वा वागीश्वरीपदं चतुर्वर्गफलप्रदं ।
सच्छन्दोमञ्जरीटीका दाताराभेण तन्यते ॥
यद्यस्याः कतिधा व्याख्या व्याख्याताः पूर्व्वसूरिभिः ।
तथापि बालबोधाय मयाप्याख्यायतेऽधुना ॥

ग्रन्थकारेण ग्रन्थस्य श्रीकृष्णलीलावर्णनप्रधानतया महाकाव्यत्वादादौ शिष्टाम्शिष्टाचिरितेष्टदेवतानमस्काररूपं मङ्गलं वस्तुनिर्द्देशश्च कृतः । सर्गबन्धो महाकाव्यमुच्यते तस्य लक्षणं । आशीर्नमस्क्रिया वस्तुनिर्द्देशो वापि तन्मुखमित्युक्तेः ।

ग्रन्थम्मञ्जरीत्वेन परिकल्प्य महाकविः ।
गङ्गादासप्रकारेण स्तवकैः षड्भिरन्वितं ॥

देवमित्यादि ।

**End.** भाराक्रान्तेति । हरिः श्रीकृष्णो जयति जयतु तुष्टाने तिः । किम्भूतः, गर्व्वं जगं विलोक्य दृष्ट्वा जलदश्यामाकुलावक्रवीसंश्लेषोत्थ——

**Colophon.** परिसमाप्तिवाक्यादिकं नास्ति ।

**विषयः ।** गङ्गादासकृतच्छन्दोमञ्जर्य्या व्याख्यानम् ।

---

**No. 2067.** शाक्तक्रमः । Substance, country-made yellow paper, 14 × 3 inches. Folia, 105. Lines, 5 on a page. Extent, 1,503 ślokas. Character, Bengali. Date, ? Place of deposit, Láṭora, Zilá Rájasáhi, Kumár Yogendranátha Ráya. Appearance, fresh. Prose and verse. Correct.

**S'ákta-krama.** A summary of Tántric rituals. By Purṇánanda Paramahaṅhsa. The work is divided into 7 chapters, and treats of all

the leading rites and ceremonies which the followers of the S'ákta sect of the Trántrics are required to perform.

CONTENTS: I. Proper place for Ekaliñga. The Kúrmachakra diagram. Corpses, their varieties. Internal worship. Offering of water to the manes. Offering of Arghyas. Rosaries. The great internal worship. The great yajna.

II. Classification of worshippers. *Divya* or Celestial class. *Vira* or heroic class. *Pashu* or animal class. Listening, contemplation, &c. Means of knowing one's self. True knowledge. Conduct of the class called *China* or Chinese. Duties of Kaulas. Rules regarding the five M.'s S'akti defined. Routine of Kaulas. Duties on particular occasions.

III. Worship of virgins of different ages. Sacrifice of she-jackals. Worship of Kula. Recounting of rosaries. Sanctification of rosaries. Drinking for pleasure prohibited. Worship without spirituous drinks condemned.

IV. Purification of articles of worship. Identity of one's self. Articles of worship derived from bastards, &c.

V. The rite of Vijayá. Hermitage. Worship of shoes. Form of Kámakalá. Secret worship. Purificatory rites. Rites on cremation grounds. Rite called Níla.

VI. Rites for becoming Víra. Worship of S'akti. Praise of nonduality.

VII. Diabolical rites for causing stupefaction, subjugation, &c. &c.

**Beginning.** नत्वा श्रीपरदेवताङ्घ्रियुगलं शान्ताक्रमं कामदं
पूर्णानन्दयतिस्तनोति शिवयोस्तन्त्रानुसारक्रमात् ।
श्रीदीक्षागुरुपादपद्मयुगलध्यानात्मनो निर्मलो
द्वैतध्वान्तविनाशनाय विदुषामामोदसंवृद्धये ॥
सहस्रारे महापद्मे प्रातः शिरसि निर्मले ।
पूर्णेन्दुमण्डलयुते शुद्धस्फटिकसन्निभं ॥
गन्धानुलेपितं शान्तं वरदाभयपाणिनम् ।
मन्दस्मितं निजगुरुं कारुण्येनावलोकितं ॥ इत्यादि ।

**End.** प्रसन्ना तेन गाथ्या कुलीनैः शिष्यचेतसे ।
भावचूडामणिं वीक्ष्य कुलचूडामणिं तथा ।
तन्त्रचूडामणिं वीक्ष्य वीरतन्त्रकजामलं ॥

कुलार्णवं प्रक्रमञ्च वामकेश्वरसंज्ञितं ।
समयार्णमातृकाञ्च उत्तरातन्त्रमेव च ॥
गुरूणाञ्च मतं ज्ञात्वा कालीतन्त्रं कुलार्णवं ।
पूर्णानन्देन गिरिणा कृतं श्रीपतिवासरे ॥
इषे कालाङ्कवेदेन्दुशाके मङ्गलवासरे ।
नित्यमुक्तस्वभावार्थं शाक्तक्रममनुत्तमं ॥

**Colophon.** इति श्रीपूर्णानन्दपरमहंसविरचिते शाक्तक्रमे सप्तमोऽंशः ॥

विषयः। १प्रथमांशे,—एकलिङ्गस्थानलक्षणं। कूर्म्मचक्रलक्षणं। कोमलचूड़कादिशवलक्षणं। श्मशानयजनविधिः। तर्पणविधिः। अर्घ्यसाधनविधिः। जपविधिः। महाश्मशानयजनविधिः। महायज्ञविधिः।

२ये अंशे,—दिव्यादिभावनिरूपणं। दिव्यभावलक्षणादिकथनं। वीरभावलक्षणादिलक्षणं। पशुभावलक्षणादिकथनं। श्रवण-मनन-निदिध्यासनलक्षणादिकथनं। आत्मसाक्षात्कारोपायकथनं। तत्त्वज्ञानादिनिरूपणं। चीनाचारकथनादिकं। कौलिककर्त्तव्यकथनं। पञ्चमकारसाधनविधिः। शक्तिनिरूपणादिकं। कुलाचारलक्षणं। समयाचारलक्षणं।

३ये अंशे,—कुमारीपूजाविधिः। तल्लक्षणादिकथनं। तत्र वत्सरसंख्यया फलविशेषकथनं। शिवाबलिदानविधिः। कुलपूजनविधिः। मालाजपविधिः। मालाप्रतिष्ठाविधिः। कामतः सुरापाननिषेधः। मद्यादिहीनपूजाया निन्दितत्वकीर्त्तनं।

४र्थे अंशे,—द्रव्यशुद्धिविधिः। आत्मस्वरूपनिरूपणं। कुण्डगोलोद्भवादिद्रव्यनिरूपणं।

५मे अंशे,—विजयाकल्पकथनं। अवधूताश्रमकीर्त्तनं। पादुकापूजनविधिः। कामकलारूपकीर्त्तनं। गुप्तसाधनविधिः। कल्पपरश्चरणविधिः। श्मशानसाधनविधिः। नीलसाधनविधिः।

६ष्ठे अंशे,—वीरसाधनपरश्चर्य्याविधिः। शक्तिपूजाविधिः। अद्वैततत्त्वप्रशंसा।

७मे अंशे,—वश्यस्तम्भनादिविधिः। तत्र स्थानकालादिनिरूपणं। सर्व्वत्र देवीभावावश्यकतानिरूपणञ्च।

---

**No. 2068.** पुराणसर्व्वस्वं। Substance, Palm-leaf, 40 × 2 inches. Folia, 325. Lines, 4 on a page. Extent, 8,910 ślokas. Character, Bengali. Date, Sk. 1677. Place of deposit, Viśe, Post Deṅgápáḍá, Zilá Rájasáhí, Bábu Lakshmíkánta Ráya. Appearance, old. Verse. Correct.

**Puráṇa-sarvasva.** A miscellany made up of extracts from the Puráṇas with comments thereon on history, geography, civil polity, various forms of worship, &c. By Govardhana Páṭhaka. It was compiled under the auspices of a Bengali zemindar of the name of Srísatya, who

had the title of Khan, in the year 1396 S'áka. This work is quite distinct from the one of this name noticed under No. 333 (I, 188).

**Beginning.** (प्रथमपत्रं नास्ति ।)

विधास्य तु महाराज विद्वान् पुत्रः पुरूरवाः ।
तेजस्वी दानशीलश्च यज्वा विपुलदक्षिणः ॥
ब्रह्मवादी पराक्रान्तः शत्रुभिर्युधि दुर्ज्जयः ।
आहर्त्ता चाग्निहोत्रस्य यज्ञानाञ्च महीपतिः ॥ इत्यादि ।

**End.** एतत् पुस्तं समाप्तं जनपदविदितं कारितं सत्यखानै-
र्दानैर्मानैर्विधानैरनुदिनमधिकं पण्डितान् पूजयित्वा ।
सर्व्वस्वाख्यं पुराणं परमशुभकरं भूषणं भूतलेऽस्मिन्
आचन्द्रार्कप्रकाशादमनवऋतभुक्चन्द्रसङ्ख्याशकाब्दे ॥
श्रीमद्गौड़महीमहीपतिपतिप्राप्तप्रसादोदयः
पुण्याः प्राक्तनकर्म्मणोऽतिपद+++श्रीखानाङ्किता ।
पश्चात् श्रीशुभराजखानपदवी लब्धा धरामण्डले
जीयाद्धर्म्मधुरन्धरः कुलधरो धीरो गभीरो गुणैः ॥
पुराणसर्व्वस्वमिदं प्रयत्नादकारि गोवर्द्धनपाठकेन ।
मनोरमं पुण्यवतां जनानां श्रीसत्यखानस्य यशः प्रधानं ॥

**Colophon.** इति पुराणसर्व्वस्वं समाप्तं । शुभमस्तु शकाब्दाः १६०७ ॥

विषयः । विविधपुराणसारमाहृत्य निर्म्मितोऽयं ग्रन्थराजः । तत्र एनोत्पत्तिकथनं । भुवन-कोषवर्णनं । विशेषेण भूगोलकीर्त्तनं । ज्योतिर्मण्डलसन्निवेशसंस्थानादिकथनं । तीर्थप्रकरणानि । तत्र विशेषेण गङ्गामाहात्म्यकीर्त्तनं । तर्पणप्रकरणं । दानप्रकरणं । व्रतप्रकरणं । जलदानप्रकरणं । आश्रयप्रकरणं । भक्तिप्रकरणं । मृत्युप्रकरणं । अस्थिप्रक्षेपप्रकरणञ्च । प्रयागादिप्रकरणं । वाराणसीमाहात्म्यं । गयामाहात्म्यं । जगन्नाथमाहात्म्यं । अष्टादशमहापुराणलक्षणादिकथनं । भारतसूचकथनं । रामायणसूचकथनं । चातुर्वर्ण्यचतुराश्रमधर्म्मनिरूपणं । तत्र सामान्यतः परिभाषाकथनं । धर्म्मस्वरूपकीर्त्तनं । वर्णधर्म्माः । ब्राह्मणमाहात्म्यं । ब्राह्मणादीनां जीविका-दिनिरूपणं । वर्णसङ्करनिरूपणं । दशविधसंस्कारकथनं । विद्यादानविधिकथनमुखेन शिष्यादि-लक्षणकीर्त्तनं । अभिवादनविधिः । ब्रह्मचारिविधिः । गार्हस्थ्यविधिः । तत्र स्त्रीलक्षणादि-कथनं । पुत्रलक्षणं । दारानुक्रमणविधिः । आवसथ्याधानविधिः । अग्निहोत्रादिविधिः । त्रि-सन्ध्यार्च्चनविधिः । विशेषेण प्रातःकृत्याद्याह्निककृत्यविधानं । विशेषेण शिवसूर्य्यादिपूजाविधि-कथनं । भक्तिप्रकरणं । गतिप्रकरणं । यात्राप्रकरणं । हरिहरादिस्तवनकीर्त्तनञ्च । दुर्गापूजा-प्रकरणं । रुद्राक्षधारणादिमाहात्म्यं । गीतामाहात्म्यं । विष्णुस्मरणप्रकरणं । स्मरणश्रवणादि-

माहात्म्यं । गोसेवादिविधिः । नित्यश्राद्धविधिः । आतिथ्यविधिः । भोज्याभोज्यनिरूपणं । ग्रहणादिविधिः । साध्वीधर्म्मकथनं । स्त्रीणां व्यभिचारादिलक्षणं । स्त्रीणां व्रतप्रकरणं । वानप्रस्थविधिः । यतिधर्म्मकीर्त्तनं । योगशास्त्रकथनं । तत्र विशेषत आसन-ध्यान-धारणा-प्राणायामादिलक्षणकथनं । याज्ञवल्क्यगीताकथनं । धर्म्मस्कन्धकथनं । विस्तरेण राजनीतिकीर्त्तनं । स्त्रीरक्षादिकामशास्त्रकथनं । व्यवहारविधिकथनं । तत्र विस्तरेण विचारप्रणालीकथनञ्च । परीक्षाविधिः । दण्डविधिः । सामान्यतो नीतिसारकथनं । कर्त्तव्यताप्रकरणं । कायस्थलक्षणं । धनुर्वेदकथनं । सङ्ग्रामलक्षणादिकथनं । मरकतादिरत्नपरीक्षाविधिः । तेषामुत्पत्त्यादिकथनञ्च । पुष्पराग-कर्क्केतन-पुलक-रुधिराख्यादिरत्नपरीक्षणं । लौहसंस्कारविधिः । अत्र बहुविधलौहभेदलक्षणादिनिरूपणं । वास्तुनिरूपणादिकं । गजचिकित्साविधिकथनं । अश्वपरीक्षादिविधिः । द्रव्यगुणकथनं । नाट्यप्रकरणं । यन्त्रप्रकरणं । रागप्रकरणं । ज्योतिषप्रकरणम् । वृक्षारोपणविधिः । विक्रयविधिः । गोनिष्क्रयणप्रवेशनविधिः । धान्यवपनादिविधिः । भूकम्पादिमण्डलनिरूपणं । शाकुनशास्त्रविधिः । अरिष्टनिरूपणं । उत्पातविवेकः । स्वप्नाध्यायकथनं । श्राद्धप्रकरणं । सहमरणानुमरणादिविधिः । आशौचकर्म्म । दानप्रकरणं । प्रायश्चित्तप्रकरणं । महादानप्रकरणम् । संवत्सरकृत्यनिरूपणं । दुर्गोत्सवविधिः । सङ्क्रान्तिनिरूपणं । पक्षनिरूपणं । युगाद्यादिनिरूपणं । पञ्चमीकल्पे नागपञ्चम्यादिविधिः । कालदष्टादिलक्षणकथनं । विषचिकित्सा । एकादश्यादिव्रतविधिः । अशौचनिरूपणं द्रव्यशुद्धिनिरूपणं । भविष्यकथनं । ग्रन्थादरचरित्रकीर्त्तनञ्च ।

---

**No. 2069.** दानरत्नाकरः । Substance, Palm-leaf, 19 × 2 inches. Folia, 128. Lines, 6 on a page. Extent, 2,304 *s*lokas. Character, Bengali. Date, Sk. 1707. Place of deposit, Lálora, Dighápati, Zilá Rájasáhi, Bábu Táránátha Ráya Chaudhurí. Appearance, fresh. Prose and verse. Generally correct.

**Dána-ratnákara.** A summary of the laws relating to the consecration of various kinds of gifts. By Chaṇdes'vara Ṭhakkura, minister of war and peace, and son of Vires'vara, who held the same office under some king or other whose name is not given. The author says he compiled the work after performing the rite called *Túlápurusha,* on the banks of the Vágvatí river in Nepal. The work is one of seven which he compiled under the generic name of *Ratnákara.* The specific names of the others were *Krítya, Vyravahára, S'uddhi, Pújá, Vivála* and *Grihastha,* treating severally of periodical rites, Judicature, purification, worship, inheritance, and domestic duties.

**Beginning.** तत् पातु लोचनं शम्भोः प्रियाश्लेषनिमीलितं ।
उत्क्षं स्मरजनीमाथनिद्राणमिव नीरजं ॥
अभिज्ञाभोजराजीवश्रपरिमलोद्भूतरामे साक्ष्मै-

उन्मीलद्ब्रह्मघोषप्रतिविगलदघैः प्रावर्त्तैरप्रजानां ।
लक्ष्मीं विश्वम्भरायाः स्फुटमहह कृती यो महादानदानैः
श्रीमच्चण्डेश्वरोऽयं रचयति रुचिरं दानरत्नाकरं सः ॥
श्रीचण्डेश्वरमन्त्रिणा मतिमतानेन प्रसन्नात्मना
नेपालाखिलभूमिपालजयिना धर्म्मेषु दुग्धाब्धिना ।
वाग्वत्याः सरितस्तटे सुरधुनीसाम्यं दधत्याः शुचौ
मार्गे मासि यथोक्तपुण्यसमये दत्तास्तुलापूरुषाः ॥
यस्य दानातिरेकेण लोके निर्ज्जितगौरवः ।
कल्पद्रुमः पारिजातः कामधेनुः क्वचित् क्वचित् ॥
अत्रोक्तमपि यद्दानं कृत्यरत्नाकरे पुनः ।
मासादिकृत्यसामस्त्यं गौरवात्तदुदीरितं ॥
दानविधि+ +दानस्वरूपस्य निरूपणं ।
देयादेय+रङ्गोऽत्र पात्राणां कथनं ततः ॥
महादानानि सर्व्वाणि गोसहस्रमनन्तरं ।
धान्यादिशैलदानानि गुड़धेन्वादिकानि च ॥
गवां स्वरूपतो दानं ततो हैमगवीपरं ।
कृष्णकृष्णाजिने तद्वद्दानं भूमिसुवर्णयोः ॥ इत्यादि ।

End. नायको विनायकः यक्षराट् कुवेरः ।
अथ वा दिग्गजाः कार्य्यास्तत्रापि कथयामि ते ॥
यद् द्वारं सम्मुखं तस्य देवीं तत्र प्रतिष्ठापयेत् ।
नायकं नायकं कुर्य्याद् द्वाराभ्यां मध्यतः स्थितं ॥
यः पर्शुरामवलिकर्णरघुप्रवीर-
जीमूतवाहनदधीचिशिवीन् विचिन्त्य ।
दीर्घार्द्धनिःश्वसितधूसरिताधरश्री-
रास्ते क्षणं स्तिमितभावमलक्ष्यदृष्टिः ॥
मग्ना म्लेच्छमहार्णवे वसुमती येनोद्धृता लीलया
विध्वस्तावनिवैरिणः क्षितिभुजां लक्ष्मीः समासादिता ।
दत्तः कर्व्वटकोच्चयोऽर्थिनिवहे चण्डेश्वरेणोच्चकै-
र्धर्म्मस्याभ्युदयाय तेन विहितः श्रीदानरत्नाकरः ॥
श्रीकृत्यदानव्यवहारशुद्धिपूजाविवादेषु तथा गृहस्थे ।
रत्नाकरा धर्म्मभुवो निबद्धाः कृतास्तुलापूरुषदेन सप्त ॥

